

# भार्गवतन्त्रम्



सम्पादकः
**डॉ० राघवप्रसाद चौधरी**

**गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठम्**
मोतीलाल नेहरू पार्क
इलाहाबाद-२
१९८१

# भार्गवतन्त्रम्

सम्पादकः

**डॉ० राघव प्रसाद चौधरी**

# विषयव्यवस्थापनक्रमः


| | |
|---|---|
| Foreword | i–ii |
| उपोद्घातः | क–फ |
| विषयानुक्रमणिका | क–ट |
| भार्गवतन्त्रम् | १-१७६ |
| परिशिष्टम्-१ | १७७-१८१ |
| परिशिष्टम्-२ | १८३-१८५ |
| परिशिष्टम्-३ | १८६ |
| परिशिष्टम्-४ | १८७ |
| परिशिष्टम्-५ | १८८ |
| परिशिष्टम्-६ | १८९ |
| परिशिष्टम्-७ | १९०-२३६ |
| परिशिष्टम्-८ | २३७-२८० |
| शुद्धिपत्रम्— | २८१ |


———





# FOREWORD

In the centuries following the composition of principal *Upaniṣads*, the belief in One Supreme Personal God, which had been present in Indian religious thought right since the earliest times (See RV, 1.164, 10.121, 10.129) in dormant form gained unprecedented prominence. This Supreme Personal God was known by the term *Bhagavat* meaning 'The Exalted One'. This, incidentally remains even to this day the most commonly used term for Personal God in our languages. Those who believed in Him and worshipped Him were known as *bhāgavatas*.

The analysis of available literary and the scanty epigraphical evidences seems to point towards the fact that the concept of Bhagavat in its earliest stage was in no way associated with *Viṣṇu* with whom it was identified later. The identification with *Viṣṇu* seems to have proceeded through *Kṛṣṇa-Vāsudeva* who had established himself as 'the most perfect Incarnation' of *Viṣṇu* (*Kṛṣnas tu bhavān svayam*).

After the identification of *Bhagavat* with *Viṣṇu*, the religious ideology of the *Bhāgavata*-system developed assimilating and imbibing elements of the Vedic and the post-Vedic concept of *Viṣṇu* on the one hand, as well as the popular mode of worship (*Pujā*) on the other. The followers of *Bhāgavatism*, which must have enjoyed universal appeal by now, slowly ramified themselves into two groups. The first group was formed by the Śrotriyas and Brahmins, i. e. those who leaned heavily on the Vedic tradition. The second group must have been formed by the simple Aryan folk, not deeply embedded in the Vedic tradition, who had been using its age-old mode of worship conducted with various *Upacāras* as an expression of their religious feelings. The texts of these two groups, when codified later, gave rise to two schools of *Bhāgavatism*, namely *Vaikhānasas* and the *Pāñcarātra* respectively It was the *Pāñcarātra*, however, which was to become the more popular and the more widely accepted school since it had a broader base among the masses, having incorporated in itself much of the popular religious practices–the so called *Āgamic* or *Tāntric* rites. Indeed, the very history of Hinduism is a story of the victory of popular religious beliefs over the Vedic, sacerdotal tradition.

The oldest of the extant *Pāñcarātra Saṃhitās* go back to the Gupta period though there are irrefutable evidences to show that the religious texts of the *Bhāgavata-Pāñcarātra* school started coming up even before the commencement of the composition of the *Mahābhārata*. The *'Nārāyaṇīya'* portion of *Śāntiparvan* and the *'Bhagavadgīta'* in the *Bhīṣmaparva* are two such texts incorporated later into the *Mahābharāta*.

Besides, the major *Saṃhitās* of the *Pāñcarātra* school like *Pādma*, *Pauṣkara* and *Iśvara* which deal with all the *major* topics of the theology of

the school viz. *Jñāna* (philosophy) *Yoga* (meditative practices), *Kriyā* (construction of temples, images and their consecration) and *caryā* (ritual), there are smaller compendiums too, which extensively deal with the practical aspect of any one or two of the above mentioned subjects. These are mostly termed as *Kalpas*.

*Bhārgavatantra* is one of such treatises composed mainly on the basis of the previous more extensive reference works which deal with the ritual of *Pāñcarātra* form of worship in all its aspects. The work has an extent of some 1600 verses which are divided into 25 chapters. It starts with a description of the various forms of temples and their internal lay-out, gives details of the worshipable images and describes extensively the ritual of their consecration. It then proceeds to describe the ritual details of various festivals taking place in a temple and deals summarily with the ritual of temple-worship as well as other allied subjects. The work, thus, is of special importance to the *arcakas* or the temple-worshippers. It is found to be referred to in the five important *Pāñcarātra* works which shows that it was estimated to be a work of considerable merit.

The work is being published here for the first time. It has been scholarly edited on the basis of three, and the only known, manuscripts deposited in Adyar, Madras and Tirupati respectively. Dr. R. P. Chaudhary, the editor of this work has won great praise and name for ably editing the text of *Nāradīya-Saṃhitā*, another *Pāñcarātra* work, much bigger and comprehensive in scope than the previous one (published: Tirupati, 1971). The experience that he gained from editing the *Nāradīya Saṃhitā* he has ably put in the edition of the present work. He has not only written a scholarly introduction to this work in Sanskrit dealing with the history of the *Pāñcarātra* school and the significance of the presnt work but has also added as many as eight valuable appendices to this work which facilitate a scientific and academic exploitation of the Sanskrit text to a greater extent.

I congratulate Dr. R. P. Choudhary for salvaging this work from oblivion and for presenting it to the scholars in a most presentable form and shape. I also feel obliged to him for carrying out the work assigned to him in a superb manner and to the utmost satisfaction of all concerned.

G. C. TRIPATHI
*PRINCIPAL*

G. N. Jha Kendriya
Sanskrit Vidyapeetha,
Alfred Park, Allahabad–2

August 23rd, 1981
*Śrīkṛṣṇajanmāṣṭami*, VS 2038

# उपोद्घातः

सुरभारत्याः समुपासकानां सहृदयवर्याणां समक्षं भार्गवतन्त्रस्य समालोचनात्मकमेतत् संस्करणं समुपस्थापयतः मोमुद्यते मे मनः । वैखानसपाञ्चरात्राख्ययोः वैष्णवागमयोरन्यतरस्य पाञ्चरात्रागमस्य एतावत् पर्यन्तं सर्वथा अप्रकाशितोऽयं ग्रन्थः त्रिषु स्थलेषु मातृकारूपेण समुपलब्धः इत्येतद् विवरणं अत्रैवोपोद्घाते यथास्थानमुपस्थापयिष्यते । प्रथममत्र एतद्ग्रन्थसम्बद्धाः केचन विशिष्टाः पाञ्चरात्रागमविषयाः सन्त्यवधेयाः ।

**पाञ्चरात्रागमः**

तत्र तावत्प्रथमम् आगमशब्दस्य तदनु पाञ्चरात्रशब्दस्य च अर्थविषये कश्चिद्विचार उदेति । पदवाक्यप्रमाणज्ञः भगवान् भर्तृहरिस्तावत् महाभाष्ये विद्यमानं "रक्षोहागमलघ्वसन्देहाः" इति व्याकरणाध्ययनप्रयोजनेषु अन्यतमं प्रयोजनम् 'आगमम्' व्याकुर्वन् अभिहितवान्—"पारंपर्येणाविच्छिन्न उपदेशः आगमः, श्रुतिलक्षणः स्मृतिलक्षणश्च सः" इति[1] । अर्थात् आगमः परंपरया आगतः उपदेशविशेषः तथैव प्रमाणभूतः यथा श्रुतयः स्मृतयश्च प्रमाणभूता इत्यस्याभिप्रायः । सर्वदर्शनतत्त्वज्ञ आचार्यवाचस्पतिमिश्रः आगमस्य सामान्यं लक्षणं निर्दिशन् "आगच्छन्ति बुद्धिमारोहन्ति यस्मात् अभ्युदयनिःश्रेयसोपायाः सः आगमः" इति प्रत्यपादयत्[2] । अयमभिप्रायः—अभ्युदय इत्युक्ते लौकिकं कल्याणम्, निःश्रेयस् इत्यनेन च मोक्षः, तयोः लाभोपायप्रदर्शकः शास्त्रविशेषः आगमः इति । इत्थम् लौकिककल्याणमोक्षोपायप्रतिपादकं शास्त्रमागमशास्त्रमिति फलितम् । वाराहीतन्त्रे निर्दिष्टमागमलक्षणन्तु इत्थम्—

**सृष्टिश्च प्रलयश्चैव देवतानां यथार्चनम् ।**
**साधनं चैव सर्वेषां पुरश्चरणमेव च ।।**
**षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः ।**
**सप्तभिर्लक्षणैर्युक्तमागमं तद्विदुर्बुधाः ।।**

अर्थात् सृष्टिप्रलयदेवतार्चनसर्वसाधनपुरश्चरणषट्कर्मध्यानयोगप्रतिपादकं शास्त्रमागमशास्त्रमित्यर्थः । इत्थमत्रागमशास्त्रे सप्तविषयाणां निरूपणमुक्तम् । तन्त्राणामाधारः नास्ति कश्चिद्ग्रन्थविशेषः । तन्त्राणि तु सर्वथा अपौरुषेयाणि ज्ञानरूपाण्येव । अयमेव ज्ञानविशेषः आगमपदवाच्यः इति तन्त्रशास्त्रस्य सम्मतं मतम् ।

---

१. महाभाष्यत्रिपदीटीका. १. १. १; हिन्दू विश्वविद्यालय सं० बनारस-१९६५ ई०;
२. योगभाष्यम्-तत्त्ववैशारदी व्याख्या. १. ७;

श्रीमदप्पयदीक्षितः ब्रह्मसूत्राणां श्रीकण्ठकृतशैवभाष्यस्य शिवार्कमणिदीपिकाख्यव्याख्यायां वैदिकावैदिकतया आगमस्य द्वैविध्यमाचष्टे । वैदिकागमेषु वेदाध्यायिनः अवैदिकागमेषु वेदानध्यायिनश्च अधिकृताः । इतिहासपुराणमहाभारतपाञ्चरात्रादिकाः वैदिकागमाः, बौद्धाद्यागमाः विषयविवेचनानुसारम् अवैदिकागमत्वेन च स्वीकृताः । वैदिकागमा अपि वैष्णवशाक्तशैवेति भेदेन मूलतः त्रिप्रकारकाः उक्ताः । पाञ्चरात्रागमः वैखानसागमश्चेति वैष्णवागमस्य द्विधा भेदः प्रसिद्धः । दक्षिणाचारवामाचाररूपेण शाक्तागमोऽपि द्विधा प्रसिद्धिं गतः । दक्षिणाचारः प्रायशः वैदिकमार्गानुगामी वामाचारश्च केवलमागममार्गानुगामी च वर्तते । शैवागमः कश्मीरशैवसम्प्रदायत्वेन दाक्षिणात्यशैवसम्प्रदायरूपेण च सर्वत्रागमिकानां मध्ये प्रथित एव । एतदतिरिक्तं कापालकालामुखपाशुपतशैवभेदेन चत्वारः शैवागमाः प्रसिद्धाः सन्त्येव । वैष्णवागमे विष्णुः मुख्याराध्यत्वेन स्वीकृतः । पाञ्चरात्रवैखानसागमशास्त्रयोः प्राधान्येन क्रियाप्रधानाराधनाविषयेऽवधानं दत्तमवलोक्यते । समूर्ताराधने आवश्यकानां तत्त्वानां साङ्गोपाङ्गं विवेचनमत्रागमे प्रतिपादितम् । उभयत्र शाक्तागमे शक्तेः परमाराध्यत्वं दृश्यते । शैवागमे सर्वत्र शिवः सर्वापेक्षया श्रेष्ठः परमतत्त्वरूपः स्वीकृतः वर्णितश्च । संक्षेपतः अधोलिखिताः एताः आगमिकसम्प्रदाय शाखाः ।




वैदिकावैदिकद्विविधागमसम्प्रदायेऽयं पाञ्चरात्रागमः वैदिकसम्प्रदायेऽन्तर्भूतः । यतो हि पाञ्चरात्रागमे बहुत्र निश्चिततया वैदिकतत्त्वानां प्राधान्यं दरीदृश्यते । अस्यागमस्य तान्त्रिकत्वकथने मूलं तु अत्रत्याः मण्डलदीक्षामुद्रादिवर्णनविषया वैदिकमन्त्रातिरिक्ता अत्रत्याः केचन हुं फडादिप्रयोगाश्च । वैखानसागमः शुद्धवैदिकागमत्वेन स्वीकृतः । वैखानसागमग्रन्थेषु न कुत्रचिदपि एते मण्डलादितान्त्रिकविषयाः वर्णिताः भवन्ति । प्रायः एतस्मादेव कारणात् पाञ्चरात्रागम

शुद्धवैदिकागमत्वेन न स्वीकृतः[1] । परम्परामनुश्रित्य निगमतान्त्रिकमिश्रेति भेदैः वैष्णवागमः त्रिविधः । वैखानसागमः निगमरूपेणाभिहितः, पाञ्चरात्रम् तान्त्रिकम् भागवतस्तु मिश्रश्चेति[2] । एवमेव वैखानसस्य निगमत्वं पाञ्चरात्रस्य आगमत्वमपि आनन्दसंहिता प्रतिपादयति । वैखानसागमग्रन्थः खिलाधिकारोऽपि पाञ्चरात्रस्य तान्त्रिकत्वं वैखानसस्य च वैदिकत्वं निर्दिशति । अत्रैव वैखानसः सौम्यः पाञ्चरात्रम् आग्नेयम् चेत्यप्युक्तम्[3] । इत्थं पाञ्चरात्रागमस्य तान्त्रिकत्वं बहुत्र निरूपितम् । वस्तुतः विचार्यते चेत् पाञ्चरात्रस्य सत्यपि तान्त्रिकत्वे वैदिकपरम्परानुसारित्वं न हीयते । केषुचित् पाञ्चरात्रागमग्रन्थेषु सम्यग् अयं विषयः प्रतिपादितः । तद्यथा—

**अत्र मन्त्रास्तु ये केचित् पाञ्चरात्रप्रकाशिताः ।**
**ते सर्वे वैदिकाः ज्ञेयाः रहस्यं वैदिकं त्विदम् ॥**
**पाञ्चरात्रमिति ख्यातं वेदाध्वप्रकटीकृतम् ।[4]**

विष्वक्सेनमार्कण्डेयसंहिताभ्यामपि पाञ्चरात्रशास्त्रस्य श्रुतिमूलकत्वं प्रतिपादितम्[5] । विष्णुतन्त्रसंहितानुसारमपि पाञ्चरात्रस्य श्रुतिमूलकत्वमस्त्येव[6] । यद्यपि विष्णुसंहिता पाञ्चरात्रागमस्य तन्त्रत्वं प्रतिपादयति तथापि तस्य श्रुतिमूलकत्वम् आप्तमूलकत्वञ्च स्वीकरोत्येव । अस्य तन्त्रस्य पुराणमन्वादिस्मृतीनामिव प्रमाणत्वमङ्गीक्रियते[7] । एभिः पाञ्चरात्रागमग्रन्थस्थप्रमाणैः पाञ्चरात्रागमस्यावैदिकत्वं निश्चितमेवापगच्छति । अपि च पाञ्चरात्रप्रक्रियायां वर्णितः व्यावहारिकः पक्षः वैदिकश्रौतप्रक्रियया अत्यन्तं प्रभावितः वर्तते इत्यपि अवधेयम् । श्रौतपाञ्चरात्रप्रक्रिययोः व्यावहारिकपक्षस्य तुलनात्मकपरिशीलनेन स्पष्टमेवायं विषयः अवगम्यते । सामान्यतः अत्रैतदवगन्तव्यं यत् इयमागमिकप्रक्रिया श्रौत-

---

१. **वैखानसं पाञ्चरात्रं वैदिकं तान्त्रिकं क्रमात्** — आनन्द संहिता १४.१

२. **निगमस्तान्त्रिको मिश्रस्त्रिविधः प्रोक्त आगमः ।**
**निगमो विखनः प्रोक्तः मिश्रः भागवतः स्मृतः ।** — आनन्द संहिता ९.५

३. **विष्णोस्तन्त्रं द्विधा प्रोक्तं सौम्यमाग्नेयमित्यपि ।**
**सौम्यं वैखानसं प्रोक्तमाग्नेयं पाञ्चरात्रकम् ॥**
**सौम्याग्नेये तथा प्रोक्ते शास्त्रे वैदिकतान्त्रिके ॥**
खिलाधिकारः ४१.१-२

४. नारदीय संहिता. २९.३९-४०;

५. **श्रुतिमूलमिदं शास्त्रं प्रमाणं कल्पसूत्रवत्;** — मार्कण्डेय सं० १.३८, विष्वक्सेन सं० ८.६-७.

६. **श्रुतिमूलानि तान्येव पाञ्चरात्राणि पङ्कज ।** — विष्णुतन्त्र सं० १.३६.

७. **वेदमूलतया तन्त्रमाप्तमूलतयापि च ।**
**पुराणवत् प्रमाणं स्यात् तथा मन्वादिवाक्यवत् ॥** — विष्णु सं० २.११.

प्रक्रियायाः छाया इव वरीवर्ति । कालक्रमेण देशादिप्रभावतः अस्यां प्रक्रियायां केचन नूतना अधिका विशिष्टा वा विषयाः सन्ति समाविष्टाः । तथा हि— श्रौतप्रक्रियायागेषु केवलम् अमूर्तम् (अग्नौ होमादिः) आराधनमुक्तम्, पाञ्चरात्रागमप्रक्रियायां प्राधान्येन समूर्तमाराधनं विहितम् । परन्त्वत्र अमूर्ताराधनं न सर्वथा त्यक्तम् । आगमिकप्रक्रियायां प्रतिमायाम् अग्नौ कुम्भे मण्डले च विहितमाराधनं चतुस्स्थानार्चनरूपेण सर्वत्र प्रसिद्धम् । एतदेव चतुस्स्थानार्चनं सर्वापेक्षया उत्तमाराधनत्वेन स्वीकृतम् ।[1]

## पाञ्चरात्रागमस्य प्राचीनत्वम् —

पाञ्चरात्रागमसंप्रदायः निश्चितमेव प्राचीनः आगमिकप्रक्रियाविशेषः । अस्याः परम्परायाः प्राचीनत्वविषये कैश्चिद्विमर्शकैः विचारः कृतः । प्रसङ्गात् अस्माभिरप्यत्रास्मिन् विषये किञ्चिद्विचार्यते । तथा हि—महाभारतस्य भीष्मपर्वस्थमोक्षधर्मविवेचनप्रसङ्गे सात्वतविधेः अर्थात् पाञ्चरात्रप्रक्रियाया. प्रशस्तिः दृष्टिपथमारोहति[2] । अतः पाञ्चरात्रस्य सामान्यः कालः भीष्मपर्वणः रचनाकालापेक्षया प्राचीनः भवेदिति अनुमीयते । परन्तु महाभारतस्य रचनाकालः सर्वथा विवादरहितः निश्चितः कश्चिदेको न निर्धारितः । आधुनिकविमर्शकानां मते कालक्रमेण विरचितं महाभारतं दीर्घे काले पूर्णताम् अगात्[3] । अतः भीष्मपर्वणः पाञ्चरात्रविधिनिरूपकभागस्य रचनाकालनिर्धारणं नाति सुकरम् । अथापि आलोचकैः निर्धारितमहाभारतरचनाकालात् पूर्वमेव पाञ्चरात्रप्रक्रियायाः सत्ता स्वीकारे नास्ति विवादस्यावसरः ।

श्रीमतः सी० बी० वैद्यमहाशयस्य मते दीर्घे काले सम्पन्नापि महाभारतस्य संरचना क्रैस्तवीयतृतीयशताब्दं यावत् पूर्णतामगात्[4] । जार्ज ग्रोयर्सनमते क्रैस्तवोयद्वितीयचतुर्थशतकयोः मध्ये अधुनोपलब्धस्य महाभारतस्य स्वरूपं विरचितम् आसीत्[5] । विन्टरनित्समहाशयः क्रैस्तपूर्वचतुर्थशतकादारभ्य क्रैस्तवीयचतुर्थशतकपर्यन्तं मध्ये विद्यमानं दीर्घं कालं महाभारतस्य रचनाकालं मन्यते[4] । एतन्मतालोडनमपि पाञ्चरात्रसम्प्रदायस्य क्रैस्तवीयचतुर्थशतकात् पूर्वकालिकत्वं

---

१. **एकं तु बिम्बकं प्रोक्तं द्विस्थानं बिम्बपावकम् ।**
**त्रिस्थानं कुंभसंयुक्तं चतुस्स्थानं तु मण्डलम् ॥** अनिरुद्ध सं० ६.६३-६४
**कुंभमण्डलबिम्बाग्नौ पूजनं चोत्तमं भवेत् ।**
**उत्तमाराधनेनैव सर्वदोषक्षयं गतम् ॥** अनिरुद्ध सं० ६.६०

२. महाभारतम्. भीष्म प० ६६.४०;

३. जयाख्यसंहिता. प्रस्तावना. पृ० ४२.४३;

४. History of Indian Literetur, Part II, Page 465, 475;

५. जयाख्यसंहिता. प्रस्तावना. पृ० ४३;

साधयति । ब्रह्मसूत्रस्याविरोधाध्यायनामके द्वितीयाध्यायस्थद्वितीये पादे (तर्कपादे) सांख्यवैशेषिकजैनसर्वास्तिवादादिमतानां युक्तिपूर्वकं निराकरणप्रसंगे पाञ्चरात्रमतस्यापि निराकरणमवलोक्यते[1] । ब्रह्मसूत्राणां रचनाकालश्च क्रैस्तवीयषष्ठशतकात् प्राचीनः स्वीकृतः[2] । अतः पाञ्चरात्रप्रक्रिया निश्चितमेव क्रैस्तवीयषष्ठशतकात् पूर्वकाले प्रसिद्धा आसीत् इति वक्तुं शक्यम् ।

केषांचित् शिलालेखानामालोडनेनापि पाञ्चरात्रागमस्य कालविषये किञ्चित् तथ्यमस्माकं समक्षमायाति । तद्यथा—क्रिस्तोः प्राक् द्वितीयशताब्दे लिखिते राजपुतानाप्रदेशस्थघोसुण्डिनामके नगरे उपलब्धे शिलालेखे संकर्षणवासुदेवयोः आलयं परितः प्राकारकल्पनोल्लेखः दृश्यते । क्रिस्तोः अव्यवहितपूर्वशताब्दे समुल्लिखिते नानाघाटग्रामस्थगुहायामुपलब्धे एकस्मिन् शिलालेखस्थमङ्गलश्लोके वासुदेवसंकर्षणशब्दौ समुल्लिखितौ दृश्येते । भगवन्तं वासुदेवं प्रीणयितुं भागवतः होलियोदोरा गरुडध्वजस्तंभं प्रतिष्ठापितवान् इति वेशनगरग्रामे समुपलब्धेन शिलालेखेनावगम्यते । अस्य शिलालेखस्य कालः क्रिस्तोः प्राक् द्वितीयः शताब्दः स्वीकृतः । इत्थम् क्रिस्तोः प्राक् द्वितीयशताब्दे भारतीयसमाजे वासुदेवाराधनस्य प्रचारः तदाराधकानां भागवताभिधानं च स्पष्टमेव सिद्धयति[3] । तदानींतन काले भगवदाराधनविधिप्रतिपादकस्य पाञ्चरात्रशास्त्रस्य सत्त्वम् अपि स्वयमेव साधितं भवति ।

क्रिस्तोः प्राक् चतुर्थे शताब्दे चन्द्रगुप्तशासनकाले भारतभ्रमणार्थमागतेन यवनपर्यटकमेगास्थनिजेन सौरसेनीयः कश्चित् क्षत्रियः वासुदेवाराधकत्वेन वर्णितः । प्राचीनकालादेव वासुदेवाराधनं सात्वतविधिमूलकमिति सर्वविदितम् । सात्वतभागवतशब्दौ च सामान्यतः परस्परपर्यायवाचकौ । महाभारते भीष्मपर्वणि अपि सात्वतविधेः चर्चा दृश्यते । तद्यथा—

**ब्राह्मणैः क्षत्रियैः वैश्यैः शूद्रैश्च कृतलक्षणैः ।**
**सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिः ॥**
**द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।**
**सात्वतं विधिमास्थाय गीतः संकर्षणेन यः ॥**

अयमभिप्रायः येन विधिना भगवान् वासुदेवः आराध्यते स एव विधिः भागवतविधिः । भागवतविधिना भगवदाराधकोऽपि भागवत इत्युच्यते । तस्य मतं भागवतमतम् इति प्रसिद्धम् । इत्थम् भागवतविधिः भागवतः भागवतमतं चैतत्-

———————

१. ब्रह्मसूत्रशांकरभाष्यम्. २.२.४२-४५;
२. भारतीयदर्शन. पृ० ३३६;
३. Vaishnavism Saivism and other minor religiouns of India.

प्रक्रियायाः छाया इव वरीवर्ति । कालक्रमेण देशादिप्रभावतः अस्यां प्रक्रियायां केचन नूतना अधिका विशिष्टा वा विषयाः सन्ति समाविष्टाः । तथा हि— श्रौतप्रक्रियायागेषु केवलम् अमूर्तम् (अग्नौ होमादिः) आराधनमुक्तम्, पाञ्चरात्रागमप्रक्रियायां प्राधान्येन समूर्तमाराधनं विहितम् । परन्त्वत्र अमूर्ताराधनं न सर्वथा त्यक्तम् । आगमिकप्रक्रियायां प्रतिमायाम् अग्नौ कुम्भे मण्डले च विहितमाराधनं चतुस्स्थानार्चनरूपेण सर्वत्र प्रसिद्धम् । एतदेव चतुस्स्थानार्चनं सर्वापेक्षया उत्तमाराधनत्वेन स्वीकृतम् ।[1]

## पाञ्चरात्रागमस्य प्राचीनत्वम्—

पाञ्चरात्रागमसंप्रदायः निश्चितमेव प्राचीनः आगमिकप्रक्रियाविशेषः । अस्याः परम्परायाः प्राचीनत्वविषये कैश्चिद्विमर्शकैः विचारः कृतः । प्रसङ्गात् अस्माभिरप्यत्रास्मिन् विषये किञ्चिद्विचार्यते । तथा हि—महाभारतस्य भीष्मपर्वस्थमोक्षधर्मविवेचनप्रसङ्गे सात्वतविधेः अर्थात् पाञ्चरात्रप्रक्रियाया प्रशस्तिः दृष्टिपथमारोहति[2] । अतः पाञ्चरात्रस्य सामान्यः कालः भीष्मपर्वगः रचनाकालापेक्षया प्राचीनः भवेदिति अनुमीयते । परन्तु महाभारतस्य रचनाकालः सर्वथा विवादरहितः निश्चितः कश्चिदेको न निर्धारितः । आधुनिकविमर्शकानां मते कालक्रमेण विरचितं महाभारतं दीर्घे काले पूर्णताम् अगात्[3] । अतः भीष्मपर्वणः पाञ्चरात्रविधिनिरूपकभागस्य रचनाकालनिर्धारणं नाति सुकरम् । अथापि आलोचकैः निर्धारितमहाभारतरचनाकालात् पूर्वमेव पाञ्चरात्रप्रक्रियायाः सत्ता स्वीकारे नास्ति विवादस्यावसरः ।

श्रीमतः सी० बी० वैद्यमहाशयस्य मते दीर्घे काले सम्पन्नापि महाभारतस्य संरचना क्रैस्तवीयतृतीयशताब्दं यावत् पूर्णतामगात्[4] । जार्ज ग्रोयर्सनमते क्रैस्तवोयद्वितीयचतुर्थशतकयोः मध्ये अधुनोपलब्धस्य महाभारतस्य स्वरूपं विरचितम् आसीत्[5] । विन्टरनित्समहाशयः क्रैस्तपूर्वचतुर्थशतकादारभ्य क्रैस्तवीयचतुर्थशतकपर्यन्तं मध्ये विद्यमानं दीर्घं कालं महाभारतस्य रचनाकालं मन्यते[5] । एतन्मतालोडनमपि पाञ्चरात्रसम्प्रदायस्य क्रैस्तवीयचतुर्थशतकात् पूर्वकालिकत्वं

---

१. **एकं तु बिम्बकं प्रोक्तं द्विस्थानं बिम्बपावकम् ।**
**त्रिस्थानं कुंभसंयुक्तं चतुस्स्थानं तु मण्डलम् ॥** अनिरुद्ध सं० ६.६३-६४
**कुंभमण्डलबिम्बाग्नौ पूजनं चोत्तमं भवेत् ।**
**उत्तमाराधनेनैव सर्वदोषक्षयं गतम् ॥** अनिरुद्ध सं० ६.६०

२. महाभारतम्. भीष्म प० ६६.४०;

३. जयाख्यसंहिता. प्रस्तावना. पृ० ४२.४३;

४. History of Indian Literetur, Part II, Page 465, 475;

५. जयाख्यसंहिता. प्रस्तावना. पृ० ४३;

साधयति । ब्रह्मसूत्रस्याविरोधाध्यायनामके द्वितीयाध्यायस्थद्वितीये पादे (तर्कपादे) सांख्यवैशेषिकजैनसर्वास्तिवादादिमतानां युक्तिपूर्वकं निराकरणप्रसंगे पाञ्चरात्रमतस्यापि निराकरणमवलोक्यते[1] । ब्रह्मसूत्राणां रचनाकालश्च क्रैस्तवीयषष्ठशतकात् प्राचीनः स्वीकृतः[2] । अतः पाञ्चरात्रप्रक्रिया निश्चितमेव क्रैस्तवीयषष्ठशतकात् पूर्वकाले प्रसिद्धा आसीत् इति वक्तुं शक्यम् ।

केषांचित् शिलालेखानामालोडनेनापि पाञ्चरात्रागमस्य कालविषये किञ्चित् तथ्यमस्माकं समक्षमायाति । तद्यथा--क्रिस्तोः प्राक् द्वितीयशताब्दे लिखिते राजपुतानाप्रदेशस्थघोसुण्डिनामके नगरे उपलब्धे शिलालेखे संकर्षणवासुदेवयोः आलयं परितः प्राकारकल्पनोल्लेखः दृश्यते । क्रिस्तोः अव्यवहितपूर्वशताब्दे समुल्लिखिते नानाघाटग्रामस्थगुहायामुपलब्धे एकस्मिन् शिलालेखस्थमङ्गलश्लोके वासुदेवसंकर्षणशब्दौ समुल्लिखितौ दृश्येते । भगवन्तं वासुदेवं प्रीणयितुं भागवतः होलियोदोरा गरुडध्वजस्तंभं प्रतिष्ठापितवान् इति वेशनगरग्रामे समुपलब्धेन शिलालेखेनावगम्यते । अस्य शिलालेखस्य कालः क्रिस्तोः प्राक् द्वितीयः शताब्दः स्वीकृतः । इत्थम् क्रिस्तोः प्राक् द्वितीयशताब्दे भारतीयसमाजे वासुदेवाराधनस्य प्रचारः तदाराधकानां भागवताभिधानं च स्पष्टमेव सिद्धयति[3] । तदानींतन काले भगवदाराधनविधिप्रतिपादकस्य पाञ्चरात्रशास्त्रस्य सत्त्वम् अपि स्वयमेव साधितं भवति ।

क्रिस्तोः प्राक् चतुर्थे शताब्दे चन्द्रगुप्तशासनकाले भारतभ्रमणार्थमागतेन यवनपर्यटकमेगास्थनिजेन सौरसेनीयः कश्चित् क्षत्रियः वासुदेवाराधकत्वेन वर्णितः । प्राचीनकालादेव वासुदेवाराधनं सात्वतविधिमूलकमिति सर्वविदितम् । सात्वतभागवतशब्दौ च सामान्यतः परस्परपर्यायवाचकौ । महाभारते भीष्मपर्वणि अपि सात्वतविधेः चर्चा दृश्यते । तद्यथा—

**ब्राह्मणैः क्षत्रियैः वैश्यैः शूद्रैश्च कृतलक्षणैः ।**
**सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिः ।।**
**द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।**
**सात्वतं विधिमास्थाय गीतः संकर्षणेन यः ।।**

अयमभिप्रायः येन विधिना भगवान् वासुदेवः आराध्यते स एव विधिः भागवतविधिः । भागवतविधिना भगवदाराधकोऽपि भागवत इत्युच्यते । तस्य मतं भागवतमतम् इति प्रसिद्धम् । इत्थम् भागवतविधिः भागवतः भागवतमतं चैतत्-

---

१. ब्रह्मसूत्रशांकरभाष्यम्. २.२.४२-४५;

२. भारतीयदर्शन. पृ० ३३६;

३. Vaishnavism Saivism and other minor religiouns of India.

त्रयमपि क्रिस्तोः प्राक् तृतीये चतुर्थे च शताब्दे प्रसिद्धमासीत्। अतः एतेषां त्रयाणां विस्तृतविवेचनपरं किञ्चिच्छास्त्रं तदानीमपि उपलब्धमासीदिति स्वतः सिद्ध्यति। तच्च शास्त्रं पाञ्चरात्रशास्त्रं सात्वतशास्त्रं वेति नाम्ना तदानीं प्रसिद्धं भवेदिति वक्तुं शक्यम्।

क्रिस्तोः प्राक् द्वितीयशताब्दे तमिलभाषायां रचितयोः शिलप्पाधिकार-परिपडलेति ग्रन्थद्वयोः निर्दिष्टं गरुडध्वजसङ्कर्षणवासुदेवानिरुद्धश्रीकृष्णबलदेव-बिम्बानां वर्णनं[1] पाञ्चरात्रप्रक्रियां क्रिस्तोः प्राक् द्वितीयशताब्दात् पूर्वकालिकत्वं साधयति इति कथनं नायुक्तम्।

क्रिस्तोः प्राक् सप्तमशताब्दे विद्यमानः महान् वैयाकरणः आचार्यपाणिनिः वसुदेवस्य पुत्रः इति प्रवृत्तिनिमित्तमादाय वासुदेवशब्दं व्युत्पादयितुं "वासुदेवार्जुनाभ्यां वुन्[2]" इति सूत्रं व्यरचत्। ननु वसुदेवस्य पुत्रः इत्येतादृशार्थप्रतिपादक-वासुदेवशब्दं व्युत्पादयितुं "गोत्रक्षत्रियाख्येभ्यः बहुलं वुञ्"[3] इति सूत्रे विद्यमाने सति वुन् प्रत्ययविधायकं सूत्रं व्यर्थमिति चेन्न, परमात्मार्थप्रतिपादकं वासुदेवशब्दं व्युत्पादयितुं तस्यावश्यकत्वात्। अन्यथा वासुदेवार्जुनेत्यादि सूत्रस्य वैयर्थ्यं स्पष्टमेव। अतः पाणिनिकालेऽपि परमात्मवाचकः वासुदेवशब्दः प्रसिद्धः आसीदिति सिध्यति। तथा हि महाभाष्ये भगवता पतञ्जलिना प्रदीपे कैयटेन चोक्तं— 'नित्यः परमात्मा देवताविशेषः इह वासुदेवो गृह्यते इति विशेषः,। "नैषा क्षत्रियाख्या संज्ञैषा तत्र भवतः[4]"। इत्थं पाणिनेः काले वासुदेवस्य परमात्मवाचकत्वे सिद्धे तस्य आराधनप्रक्रियाविवेचकस्य सात्वतविधेः अर्थात् पाञ्चरात्रप्रक्रियायाः सत्तास्वीकारे न दोषः।

वैखानसागमसम्प्रदाये दैविकमानुषद्विविधवासुदेवयोः पृथक्-पृथक् बिम्बादिकल्पनवर्णनमपि देवरूपस्य वासुदेवस्य मानुषवासुदेवस्य च स्पष्टं पार्थक्यं बोधयति[5]।

सात्वतशब्दः ऐतरेयब्राह्मणे[6] शतपथब्राह्मणे[7] चोपलभ्यते इति डॉ० एस० के० अय्यंगारमहाशयानां मतम्। यद्येतन्मतं प्रामाणिकं तर्हि पाञ्चरात्रप्रक्रियायाः कालः क्रिस्तोः प्राक् स्वीकर्तव्यः एव।

---

१. आलवारकलकालनिले. लेखक :—श्रीराघव अय्यंगारः;

२. अष्टाध्यायी-४.३.१८;

३. अष्टाध्यायी-४.३.९९;

४. महाभाष्यम्. ४.३.९८;

५. विमानार्चनकल्पः. पटलः ६०; पृ० ३८४-३८५.

६. ऐतरेयब्राह्मणम्. १.२५.६; ८.१४.३;

७. शतपथब्राह्मणम् ११.५.४-२१;

इत्थम् अङ्गुलग्राहिकतया पाञ्चरात्रागमारंभकालस्य निश्चिततया वक्तुमशक्यत्वेऽपि उक्तैः प्रमाणैः अस्य सम्प्रदायस्य प्राचीनत्वविषये नास्ति संशयः। अयं सम्प्रदायः क्रिस्तो अनेकशताब्दपूर्वकालादेव प्रसृत आसीत् इति कथनं युक्तमेव। यद्यपि दृढप्रमाणाभावे पाञ्चरात्रागमस्योपलब्धग्रन्थानां प्रणयनकालः वक्तुमशक्यः तथापि एम्बार श्रीकृष्णमाचार्यः जयाख्यसंहितायाः लेखनकालं क्रिस्ताब्दस्य सप्तमशताब्दात् पूर्वं मन्यते[1]। बाह्यसाक्ष्यमनुसृत्य नारदीयसंहितायाः लेखनकालः क्रिस्तोः अष्टमशताब्दात् पूर्वं बुद्धावताराच्च अनन्तरं स्वीकृतः[2]।

## पाञ्चरात्रागमस्य वैविध्यम्—

दशमशताब्दे आचार्योत्पलः उपनिषच्छ्रुतिसंहितेति त्रीणि विशेषणानि प्रदर्शयन् अस्य पाञ्चरात्रशास्त्रस्य वैशिष्ट्यं बोधितवान्[3]। यद्यपि श्रीप्रश्नसंहितायाः विदुषी सम्पादिका पाञ्चरात्रस्योक्तत्रैविध्यविषये अश्रद्धां प्रादर्शयत्,[4] तथापि पाञ्चरात्रागमस्य केषुचित् ग्रन्थेषु विद्यमानाः पुष्पिकाः अवलोक्य आचार्योत्पलोक्तं त्रैविध्यं युक्तमेव प्रतिभाति। विश्वामित्रसंहितायाः कासुचित् अध्यायान्तपुष्पिकासु 'उपनिषत्' इति शब्दः प्रयुक्तः।[5] पौष्करसंहितायाः पाद्मसंहितायाश्च अध्यायान्तपुष्पिकासु 'महोपनिषत्' इति शब्दः दृश्यते[6]। वाराहसंहितायाः पुष्पिकायामपि 'महोपनिषच्छब्दः प्रयुक्तः[7]।' संहिताशब्दस्य प्रयोगस्तु सर्वत्र प्रसिद्ध एव। नारदीयसंहिता श्रीप्रश्न संहिताप्रभृति पाञ्चरात्रग्रन्थेषु सर्वत्र पुष्पिकासु संहिताशब्दः निर्दिष्टः। श्रुतिशब्दः पौष्करसंहितायाम् ईश्वरसंहितायां च प्रयुक्तः। तत्र तावत् आगमसिद्धान्तस्य लक्षणनिरूपणक्रमे एतच्छास्त्रं श्रुतिस्वरूपम् इत्युच्यते[8]। इत्थम् अद्यापि त्रिविधं पाञ्चरात्रशास्त्रम् अस्माकं समक्षं वर्तते। परन्तु विषयविवेचनदृष्ट्या एषु त्रिषु परस्परं न कश्चिद्भेदः वैशिष्ट्यं वावलोक्यते।

---

१. जयाख्यसंहितोपोद्घातः पृ० ५३;
२. नारदीयसंहितोपोद्घातः पृ० झ-ञ;
३. जयाख्यसंहिता—Introduction, pag-7.
४. श्रीप्रश्नसंहिता—English Introduction, pag-16.
५. विश्वामित्रसंहिता—पृ० ८.
६. पाद्मसंहिता—ज्ञा० पा० अ० १;
पौष्करसंहिता पृ० ३;
७. वाराहसंहिता. मातृका—५५२. के० सं० विद्यापीठम्, तिरुपति;
८. ईश्वरसंहिता—२१. ५६६;
पौष्करसंहिता—१३. ५२८;

पाञ्चरात्रग्रन्थेषु अस्यागमस्य अनेके अवान्तरभेदाः उक्ताः। अस्मिन् विषयेऽपि अत्र कश्चिद्विचारः अपेक्षितः। ईश्वरसंहितोक्तप्रकारेण दिव्यं मुनिभाषितं चेति द्विविधमेतच्छास्त्रम्। भगवान् वासुदेवः मूलवेदाननुसृत्य सात्वतं पौष्करं जयाख्यं चेति दिव्यशास्त्ररूपं संहितात्रयं संकर्षणमुपदिदेश। भगवता संकर्षणेन एतानि दिव्यशास्त्राणि लोके प्रवर्तितानि[1]। एतद्दिव्यं शास्त्रं सात्वतशास्त्ररूपेणापि प्रसिद्धम्[2]। एकायनवेदशब्देनापि पाञ्चरात्रशास्त्रं प्रसिद्धम्। मोक्षोपलब्धौ केवलमेकस्य पाञ्चरात्रागमस्यैव कारणभूतत्वात् अस्यैकायनवेद इति अन्वर्थं नाम। अयमेकायनवेदः महतः वेदवृक्षस्य मूलं सद्ब्रह्मवासुदेवात्मतत्त्वस्य संश्रयः दिव्यबलादिमन्त्रोपेतश्च वर्तते। संशयरहितत्वात् एतच्छास्त्रम् अविद्यातिमिरनाशकं चोक्तम्[3]। लोके सात्वतशास्त्रस्य प्रवृत्तिनिर्देशक्रमे तत्तद्युगेषु अनुष्ठानयोग्यधर्माणां संक्षिप्तवर्णनावसरे आदौ कृतयुगे योग्याः मानवादयः भागवतधर्मानुष्ठातारः त्रेतायुगे विविधकामनाभिराक्रान्ता मानवाः व्यामिश्रयाजिनश्च भवन्तीति उक्तम्। व्यामिश्रयाजिभिः त्यक्तः आदिसनातनः भागवतधर्मः तदानीं वासुदेवसमादृतः अन्तर्दधाति। अनन्तरं भगवान् योग्यानामधिकारिणां कृते एतच्छास्त्रं प्रवर्तयति[4]। प्राचीनकाले तोताद्रिशिखरे दीर्घकालपर्यन्तं तपसि संलग्नः शाण्डिल्यः त्रेतायुगस्यान्ते कलियुगस्य चादौ संकर्षणात् एकायनवेदं लेभे। शाण्डिल्यः लब्धमेकायनवेदं सुतन्तुजैमिनिभृग्वौपगायनमौञ्जायनेभ्यश्चायच्छत्। संकर्षणात् शाण्डिल्येनाधीतं शास्त्रं दिव्यशास्त्रम् उच्यते[5]। अनुष्टुभ् छन्दोबद्धतया व्याससमासरूपेण ब्रह्मरुद्रेन्द्रादिभ्यः प्रभुवरेभ्यः दिव्यलोकेषु प्रवर्तितत्वात् एतच्छास्त्रं दिव्यशास्त्रमिति।

वक्तृभेदात् सात्विकराजसतामसपौरुषभेदैः मुनिभाषितपाञ्चरात्रशास्त्रस्य चत्वारः भेदाः उक्ताः। एतेषां चतुर्णां लक्षणानि चोक्तानि। तथाहि-पुण्डरीकाक्षात् यथास्थितम् अर्थजातं ज्ञात्वा तदनुरूपं प्रणीतं शास्त्रं सात्विकं शास्त्रम्। सात्विकशास्त्राणामर्थज्ञानपूर्वकं तदनुरूपं च स्वबुद्ध्युन्मेषकल्पितार्थजातबोधकं विज्ञानतत्त्वं सर्वेश्वरात् स्वीकृत्य स्वविकल्पविजृम्भणैः संक्षेपतः ब्रह्मादिना प्रणीतं, पुनः ब्रह्मणः ऋषिभिः संक्षिप्य स्वीकृत्य स्वकल्पितविकल्पेन निर्मितं शास्त्रं राजसशास्त्रमित्युक्तम्। केवलं स्वविकल्पेन कल्पितं शास्त्रं तामसशास्त्रम्। केवलं मनुजैः निर्मितं शास्त्रं पौरुषं शास्त्रम्[6]।

---

१. ईश्वर संहिता—१. ४७-५१;
२. ईश्वर संहिता—१. ६,
३. ईश्वर संहिता—१. १८-२१;
४. ईश्वर संहिता—१. २६-२८;
५. ईश्वर संहिता—१. ३८-४१;
६. ईश्वर संहिता—१. ५२-६३;

नारायणसंहितायां लक्षणकथनं विनैव ग्रन्थनामनिर्देशपूर्वकं पाञ्चरात्रशास्त्रस्य सात्विकराजसतामसभेदेन त्रैविध्यमुक्तम्।[१] ईश्वरसंहितोक्तसात्विकराजसतामससंहितालक्षणमनुसृत्य नारायणसंहितायां निर्दिष्टानां तत्तत्सात्विकादिसंहितानां परीक्षणं तस्य युक्तायुक्तत्वविवेचनं च विद्यते स्वतन्त्रः कश्चिद्विषयः।

**पाञ्चरात्रागमस्यावान्तरभेदाः**

स्वरूपविस्तारादिकमवलम्ब्य केषुचित् पाञ्चरात्रागमग्रन्थेषु अस्यागमस्यान्तरिकभेदविषयकः विचारः प्रवर्तितः। यद्यपि तादृशस्वरूपादिविषयमाधृत्य निश्चिततया किमपि दृढ़मतकल्पनं नातीव सुकरं तथापि प्रासंगिकत्वादस्य विषयस्य संक्षिप्तं विवेचनमत्रावश्यकम्। तथा हि ईश्वरसंहितायां पारमेश्वरसंहितायां च आगमसिद्धान्त-मन्त्रसिद्धान्त-तन्त्रसिद्धान्त-तन्त्रान्तरसिद्धान्तश्चेति पाञ्चरात्रागमस्य चत्वारः भेदाः उक्ताः[२]। तत्र तावत् क्रमागतब्राह्मणैः वासुदेवसंकर्षणानिरुद्धप्रद्युम्नेति चातुरात्म्याराधनस्य कर्तव्यत्वेन विधायकः सिद्धान्तः आगमसिद्धान्त इति। सिद्धान्तेऽस्मिन् हृत्पद्मपूर्वकं नानाव्यूहसमवेतद्वादशमूर्तीनामन्यान्यमूर्तीनां प्रादुर्भावानां प्रादुर्भावान्तर्गणानां लक्ष्म्यादिशंखचक्रगरुडदिक्पालानां च गणैः सह अस्त्रादीनां च वर्णनं दृश्यते।

चतुर्मूर्तीनामन्येषां च देवानामुपासनक्रमवर्णनपरं पाञ्चरात्रं सर्वविधफलदायकं मन्त्रसिद्धान्तत्वेन स्वीकृतम्। तन्त्रसिद्धान्ते केवलं वाक्संवृतमन्त्रैः भगवद्रूपस्याराधनमुक्तम्। सिद्धान्तेऽस्मिन् सविग्रहविविधाभरणास्त्राद्यावृतकान्तव्यूहादीनां वर्णनं दृश्यते। तन्त्रान्तरसिद्धान्ते तु व्यूहादिभेदं विना मुख्यानुवृत्तिभेदैः रहितानां परिवारसमूहैः परिवृतानां सिंहादिप्रादुर्भावगणानाम् अर्चनादिप्रकारो विहितः[३]।

ईश्वरसंहितोक्तदिशा नित्योदितव्यूहस्थापनादिविधिप्रकाशकमपौरुषेयं सद्ब्रह्मवासुदेवादियाजिनां लक्ष्यभूतब्रह्मोपनिषदाख्यदिव्यमन्त्रक्रियोपेतं विवेकदम् अनिच्छयाप्यपवर्गदायकं नित्यवासुदेवाभिधानकथितषाड्गुण्योपेतदेववर्णनात्मकं श्रुतिस्वरूपं शास्त्रमागमसद्धिान्तः। अयं सिद्धान्तः कृतयुगे सर्वोत्तम-

---

१. नारायण संहिता मातृका --पृ० १६२-१६३; K. S. V. Tirupati. 662.

२. चतुर्धाभेदभिन्नोऽयं पाञ्चरात्राख्य आगमः।
**पूर्वमागमसिद्धान्तं द्वितीयं मन्त्रसंज्ञितम्।**
**तृतीयं तन्त्रमित्युक्तम् अन्यत्तन्त्रान्तरं भवेत्।**
ईश्वर सं० २१.२६०-२६१; पारमेश्वर सं० १९.५२२-५२३;

३. पौष्करसंहिता. ३८.२९०-०००;

धर्मत्वेन स्वीकृतः[1]। त्रेतायुगस्यादौ भोगमोक्षयोः प्रसिद्धये पूर्वनिर्दिष्टादागमसिद्धान्ताज्जाग्रद्व्यूहादिमूर्तिभ्यः मन्त्रसिद्धान्तसंज्ञकं शास्त्रं समुत्पन्नम्। अथ च वासुदेवाद्द्वितीयमूर्तिसंकर्षणे, ततः प्रद्युम्ने ततोऽप्यनिरुद्धे चास्यागमशास्त्रस्य व्याप्तिक्रम उक्तः। अनिरुद्धात् वागीश्वरे तत इन्द्ररुद्रादित्यवह्न्यादिदेवतासु नारदादिषु च व्याप्तमभूदेतच्छास्त्रम्। मन्त्रसिद्धान्तस्य स्वरूपं तु शान्ततरव्यूहशान्तसुषुप्तिस्वप्नजाग्रद्व्यूहकेशवादिमूर्त्यन्तराणां प्रादुर्भावानां हृत्पद्मपीठादौ लक्ष्मीपुष्ट्यादिशक्तीनां शंखचक्रादिलाञ्छनगरुडादिप्रमुखानां भूतसिद्धादिप्रधानशातृणां नृसिंहादिविभवानां व्यूहानां सूक्ष्माख्याधिकस्य समयिपुत्रकाभिषेकस्य-तदीयसमयाचारस्य मूर्तिस्थापनप्रकारस्य मन्त्रमण्डलमुद्राकुण्डादिलक्षणादिकस्य च विस्तृतवर्णनात्मकमुच्यते। तन्त्रसिद्धान्तपाञ्चरात्रं तावत् परव्यूहादिमूर्तिभेदवर्णनं विनैव भूषणोपेतास्त्रविग्रहयुक्तं साङ्गं केवलं वा कान्तव्यूहवर्णनात्मकं शास्त्रमुक्तम्। नृसिंहकपिलक्रोडहंसवागीश्वरादिमुख्यानुवृत्तिभेदेन केवलस्य साङ्गोपाङ्गचक्राद्यस्त्रवरमुकुटादिभूषणैः सह लक्ष्म्यादिकान्तागणानां वा सपरिवारपूजनप्रकारप्रतिपादकं शास्त्रं तन्त्रान्तरसिद्धान्तशास्त्रं कथितम्[2]।

पाद्मसंहितामनुसृत्य चतुर्णामृगादिवेदानामिव पाञ्चरात्रस्य सिद्धान्तादयश्चत्वारो भेदा दृश्यन्ते। यथा शाखाभेदेन ऋगादयो वेदा अनेकधा भिद्यन्ते तथैव वक्तृभेदेन एकैकोऽपि सिद्धान्तः अनेकप्रकारकः।[3] तत्र प्राधान्येन चतुर्मूर्तिवर्णनात्मकं शास्त्रमागमशास्त्रम्। एकमूर्तिवर्णनविधायकं शास्त्रं मन्त्रसिद्धान्तसंज्ञकम्। मुख्यतो नवमूर्तिवर्णनपरं पाञ्चरात्रशास्त्रं तन्त्रसिद्धान्तरूपम्। चतुर्मुखदेवस्य त्रिमुखदेवस्य वार्चनविधिविधायकः सिद्धान्तः तन्त्रान्तरसिद्धान्त उच्यते[4]। पाद्मसंहिता मन्त्रान्तरसिद्धान्तान्तर्भूतेत्येतदपि अत्र प्रतिपादितम्[5]। कोटिजन्मानन्तरं सिद्धानामत्र संस्थितिकारणात् सिद्धान्तशास्त्रमेतदिति ईश्वरसंहितासम्मतं मतम्[6]। मीमांसादिशास्त्रेषु सिद्धप्रयोजनानां मनीषिणामेवाधिकृतत्वादस्य शास्त्रस्य सिद्धान्त इति अन्वर्थं नामेति पाद्मसंहिताया इष्टं मतम्[7]। व्यावहारिकदृष्ट्या मन्त्रसिद्धान्तलक्षणलक्षिता अनेके पाञ्चरात्रागमग्रन्थाः

---

१. ईश्वरसंहिता. २१.५६१-५६६;

२. ईश्वरसंहिता. २१.५६६-५८१;
   परमेश्वरसंहिता. १९.५२९-५४३;

३. पाद्मसंहिता. ज्ञान पाद १.७६-७८;

४. पाद्मसंहिता. ज्ञान पाद. १.८०-८३;

५. " " " १.८६;

६. ईश्वरसंहिता. २१.५८२;

७. पाद्मसंहिता. ज्ञान पाद १.७८-७९;

अद्यत्वे उपलभ्यन्ते। अतः 'अनेकभेदसम्पन्नं मन्त्रसिद्धान्तशास्त्र'मिति कथनं युक्तमेव।

पौष्करसंहिता कनीयःमध्यमोत्तमभेदेन त्रिविधं पाञ्चरात्रशास्त्रं वर्णयति। ग्रन्थविस्तारानुरोधेन कनीयसादिभेदसम्पन्नं त्रिविधं शास्त्रं पुनरपि पृथक्-पृथक् त्रिधा भिन्नं सत् नवविधम् भवति[1]। तथा हि—शतानुष्टुप् छन्दोबद्धं शास्त्रं पादसंज्ञकं सो तदपेक्षया द्विगुणश्लोकात्मकं मूलम्, सार्धद्विशतश्लोकान्वितं शास्त्रम् उद्धारसंज्ञकमिति त्रयः कनीयःभेदाः उक्ताः। सार्धद्विशतश्लोकसंवलितमुत्तरसंज्ञकम्, तस्मात् द्विगुणश्लोकसंख्यात्मकं शास्त्रं बृहदुत्तरशास्त्रम्, सार्धसहस्रश्लोकान्वितं शास्त्रं कल्पसंज्ञकमिति मध्यमपाञ्चरात्रस्य त्रैविध्यं प्रतिपादितम्। सार्धत्रिसहस्रश्लोकादारभ्य षट्सहस्रद्वादशसहस्रश्लोकात्मकं वा शास्त्रं संहिता संज्ञकमुक्तम्। लक्षश्लोकादारभ्य सपादलक्षश्लोकात्मकं ततोऽधिकश्लोकान्वितं वा शास्त्रं कल्पस्कन्धशास्त्रम्, बहुलक्षश्लोकान्वितं सार्धलक्षत्रयश्लोकात्मकं वा शास्त्रं तन्त्रमिति त्रय उत्तमपाञ्चरात्रागमभेदा उक्ताः।

पट्टिकारूपेणेत्थमुपस्थापियुं शक्यम्—




अद्यत्वे उपलब्धपाञ्चरात्रग्रन्थेषु कल्पस्कन्धतन्त्रलक्षणलक्षिताः ग्रन्थाः न सन्त्युपलब्धाः। पाद्मपारमेश्वरेश्वरसंहितादयः संहितालक्षणान्विताः अनिरुद्धविश्वामित्रशेषसंहितादयः कल्पलक्षणलक्षिताश्च ग्रन्था उपलभ्यन्ते। अधुनोपलब्धपाञ्चरात्रग्रन्थेषु एतद्द्विविधग्रन्था एव प्रधानाः। अन्यान्यलक्षणलक्षितग्रन्था न व्यवस्थिततयोपलभ्यन्ते। केषुचित् मातृकासंकलनेषु एकाध्यायात्मकः, अध्यायद्वयात्मकः, अध्यायत्रयात्मको वा अप्रकाशितपाञ्चरात्रागमग्रन्थः दृष्टिपथमारोहति। तत्र कुत्रचित् पुष्पिकासु अध्यायसंख्या निर्दिष्टा कुत्रचित् तस्याः अभावः। अध्यायसंख्याविशिष्टग्रन्थस्य अन्येऽध्यायाः ग्रन्थपातकारणात् विलुप्ता अतोऽनुपलब्धा इत्यनुमीयते। अध्यायसंख्यारहितः अल्पपरिमाणात्मकः ग्रन्थः पादादिलक्षणलक्षितपाञ्चरात्रभेदान्तर्गतो भवेदिति निर्धारणं नायुक्तम्। इत्थम् पाञ्चरात्रागमभेदानां विविधलक्षणमनुसृत्य विशिष्टमध्ययनमावश्यकम्।

---

१. पौष्करसंहिता. ३९.१२.

**पाञ्चरात्रशब्दार्थः—**

विविधपाञ्चरात्रागमग्रन्थेषु व्युत्पत्तिप्रदर्शनपूर्वकमनेकविधः पाञ्चरात्रशब्दार्थः प्रतिपादितः। तत्र तावद्विष्णुतन्त्रे देहिनां कृते वियद्वायुवह्निजलपृथ्वीति अविद्यामूलकाः पञ्च रात्रयः प्रोक्ताः। पञ्चवियदादिभोगाद्विनिवृत्तिदायकं शास्त्रं पाञ्चरात्रशास्त्रम्। अस्मिन्नेव तन्त्रे पाञ्चरात्रशब्दस्यापरोऽप्यर्थः प्रतिपादितः। तदनुसारम् अव्यक्तं मनः बुद्धिः अहंकारः चित्तं गन्धादितन्मात्राश्च देहिनां रात्रयः प्रोक्ताः। तैरव्यक्तादिभिः संवलितैः देहैः स्थितानां देहिनां भुक्तिमुक्तिप्रदं साधनं पाञ्चरात्रम् विधानम्। तदाराधनविधिप्रतिपादकं शास्त्रं पाञ्चरात्रमिति[1]। हयशीर्षसंहिता विष्णुतन्त्रे वर्णितं प्रथमं पाञ्चरात्रशब्दार्थमनुवदति[2]।

परमसंहितामते प्राणिनां कृते रात्रिभूतानां महाभूतानां पञ्चगुणानां च निवृत्तिसाधकत्वादेतच्छास्त्रं पाञ्चरात्रमित्युक्तम्। एतदनुसृत्य भूतवर्गः अव्यक्तः पुरुषश्चेति रात्रिसंज्ञकः[3]। कपिञ्जलसंहितापि पाञ्चरात्रशब्दस्य परमसंहितास्थप्रथममर्थं वर्णयति[4]।

श्रीप्रश्नसंहितानुसारम् अज्ञानमेव रात्रिः। पञ्चेति अज्ञाननाशकः। अज्ञाननाशकत्वादस्य शास्त्रस्य पाञ्चरात्रमिति अन्वर्थकं नाम[5]। भारद्वाजसंहितोक्तक्रमे ब्रह्मशिवेन्द्रनागर्षीति पञ्चरात्राणां समावेशात् एतच्छास्त्रं पाञ्चरात्रेति नाम्ना प्रसिद्धम्[6]। अस्यागमस्य सनत्कुमारसंहिताख्ये ग्रन्थे रात्रात्मकः

---

१. वियद्वायुश्च वह्निश्च आपश्चैव धरा तथा।
रात्रयो देहिनां प्रोक्ता अविद्यासंभवास्तथा।
पाञ्चरात्रमिति प्रोक्तमेतच्छास्त्रमथ तथा।
अव्यक्तं च मनो बुद्धिरहंकारश्च चित्तकम्।
तन्मात्राश्च गन्धाद्याः रात्रयो देहिनां स्मृताः।
एभिः समन्वितैर्देहैः देहिनां भुक्तिमुक्तिदम्।
साधनं पूजनं त्वेतत् पाञ्चरात्रमिति स्थितम्। १.७८-८१;

२. आकाशवायुतेजांसि पानीयं वसुधा तथा।
एताः वै रात्रयः ख्याताः ह्यचैतन्यास्तेजोत्कटाः। आ० का० ४.२-३

३. परमसंहिता---१.३९-४१;

४. पृथिव्यादीनि भूतानि गुणाः पञ्च महामते।
रात्रयो जन्तवः प्रोक्ताः सर्वशास्त्रेषु निश्चिताः।
तद्भोगाद्विनिवृत्तिश्च पाञ्चरात्रमिति स्मृतम्. १.३१-३२.

५. रात्रिरज्ञानमित्युक्तं पञ्चेत्यज्ञाननाशकम्।
तच्छास्त्रं पाञ्चरात्रं स्यात् अन्वर्थस्यानुरोधतः। २.४०

६. प्रथमं ब्रह्मरात्रं तु द्वितीयं शिवरात्रकम्।
तृतीयमिन्द्ररात्रं तु चतुर्थं नागरात्रकम्।

विभाग: द्रुष्टुं शक्य: । तत्र नागरात्रं विहाय चत्वारोऽपि रात्रा: सन्ति समुपलब्धा: । ईश्वरसंहितामनुसृत्य भगवत: पञ्चायुधोद्भूतेभ्य: शाण्डिल्यौपगायनमौञ्जायन-कौशिकभारद्वाजेभ्य: पृथक् पृथक् एकैकस्मिन् दिने भगवता उपदिष्टत्वात् एतच्छास्त्रं पाञ्चरात्रशास्त्रमभूत् । ईश्वरसंहितावदेव मार्कण्डेयसंहितायामपि पाञ्चरात्रशब्दार्थ: प्रतिपादित: । तद्यथा-सार्धकोटिप्रमाणयुक्तस्य शास्त्रस्य पञ्चसु रात्रेषु विष्णुना उक्तत्वात् पाञ्चरात्रमिति नाम संजातम्[1] । सात्विकाचारसम्पन्न-पाञ्चरात्राधिकारिभि: अनुष्ठितं शास्त्रं पाञ्चरात्रशास्त्रमिति वाशिष्ठसंहिताया मतम् ।

पाञ्चरात्रशास्त्रस्य पुरतोऽन्यानि पञ्च शास्त्राणि रात्रित्वं प्राप्नुवन्ति इति कृत्वा एतच्छास्त्रं पाञ्चरात्रशास्त्रमित्युक्तं पाद्मसंहितायाम् । अर्थात् इतर पञ्चशास्त्रापेक्षया अस्य शास्त्रस्योत्कृष्टत्वं बोध्यते[2] । अनिरुद्धसंहितायां निर्दिष्ट: पाञ्चरात्रशब्दार्थ: सामान्यत: पाद्मसंहितासदृश: । तत्रोच्यते यद्वत् दिवाकाले चन्द्र: तारका च अदृष्टा: भवन्ति तद्वदेव अस्य शास्त्रस्य समक्षं सांख्ययोगादिपञ्च-शास्त्राणि सर्वथाऽकिञ्चित्कराणि सञ्जायन्ते इत्यस्मात्कारणात् एतच्छास्त्रं पाञ्चरात्रमिति । अथवा यथा भगवतो भुवनभास्करस्योदये संजाते तत्तेजस: समक्षमन्यानि नक्षत्राणि तिरोहितानि अकिञ्चित्कराणि च भवन्ति तथैव पाञ्चरात्र-शास्त्रस्योदये सर्वाण्यपि अन्यानि शास्त्राणि मलिनानि गौणानि च भवन्ति ।[3]

पुरुषोत्तमसंहितानुसारं भक्तानां मुक्तिसाधिकाया भगवद्भक्ते: बोधकं शास्त्रं पाञ्चरात्रमित्युच्यते[4] । विश्वामित्रसंहिता पाञ्चरात्रमित्यस्मिन् पदे विद्यमानेन

---

एवं ज्ञातमृषिश्रेष्ठ पाञ्चरात्रं पुरा युगे ।
पञ्चममृषिरात्रं तु पाञ्चरात्रमिति स्मृतम् । २.१२-१३

१. सार्धकोटिप्रमाणेन कथितं तस्य विष्णुना ।
रात्रिभि: पञ्चभि: सर्वं पाञ्चरात्रमिति स्मृतम् । १.२२-२३

२. ज्ञानपाद: १.७२;

३. सांख्ययोगादिशास्त्राणि रात्रीयन्ते महान्त्यपि ।
तत्सन्निधौ समाख्यासौ तेन लोके प्रवर्तते ।
चन्द्रतारागणं यद्वत् शोभते नैव वासरे ।
तथेतराणि शोभन्ते पञ्च नैवास्य सन्निधौ ।
पञ्चत्वमथवा यद्वद्दीप्यमाने दिवाकरे ।
ऋच्छन्ति रात्रयस्तद्वत् इतराणि तदन्तिके ।
तस्मात् पाञ्चरात्राख्यं ब्रह्मलोके महीयते ॥ १.३५-३८;

४. भगवद्भक्तिरेव स्याद्भक्तानां मुक्तिसाधनम् ।
तद्भक्तिबोधकं शास्त्रं पाञ्चरात्रागमस्थितम् । १.४

पञ्चशब्देन पञ्चेन्द्रियाणि तेषां विषयान् गुणांश्चाभिधत्ते । आदानार्थक रा धातुना सह योगे कृते 'पञ्चरा' इत्यस्य शब्दस्य इन्द्रियाणां भूतानां चादाता इत्यर्थः स्वीकृतः । तस्मात् मनुष्याणां त्राणदायकत्वात् अस्य शास्त्रस्य पाञ्चरात्रमिति नामाभूत् । अस्य शास्त्रस्य सान्निध्यमनुसरणं च कुर्वतां जनानां समक्षं सांख्यादि-पञ्च शास्त्राणि रात्रिभूतानि भवन्ति । अथवा रात्रिः इत्युक्ते अज्ञानम् । तच्चा-ज्ञानं यस्य शास्त्रस्य समक्षं पञ्चत्वं प्राप्नोति तच्छास्त्रं पाञ्चरात्रमिति[1] । यद्यपि पाञ्चरात्रशब्दस्यार्थाभिधायकान्येतानि निर्वचनानि अर्थवादपरकाणीव प्रतिभान्ति तथापि अस्य शास्त्रस्य पुरतः सांख्यादिशास्त्राणां पञ्चत्वप्राप्त्यादिप्रतिपादनं व्या-वहारिकदृष्टया युक्तं प्रतिभाति । यतो हि सांख्ययोगाद्वैतादीनां दार्शनिकसम्प्र-दायानां पुरुषार्थसाधकत्वे सत्यपि अमूर्ताराधनकारणात् सामान्यजनाग्राह्यत्वं स्पष्टम् । पाञ्चरात्रागमस्य तु समूर्ताराधनपरकत्वात् सामान्यजनैरपि सुग्राह्यत्व-मिति कृत्वाऽस्य शास्त्रस्यान्यशास्त्रापेक्षया अधिकजनाकर्षकत्वम् निश्चितमेव उत्कर्षाधायकम् । अतः अस्य समूर्ताराधकस्य शास्त्रस्य समक्षं अन्यानि शास्त्राणि उपेक्षितानि भवन्ति इति तात्पर्यम् ।

केषांचित् मते पाञ्चरात्रशब्दे प्रयुक्तः रात्रशब्दः कालवाचकः स्वीकर्तव्यः । अभिगमनोपादानेज्यास्वाध्याययोगाख्यानां वैष्णवाचारनिर्वाहकपञ्चकालानां साङ्गोपाङ्गविवरणविधायकमिदं पाञ्चरात्रम् । इत्थं वैष्णवानाम् पञ्चकाला-धृताचारविधिप्रतिपादकत्वादस्य शास्त्रस्य पाञ्चरात्रमिति नाम्ना प्रसिद्धिरभूत् इत्येतन्मतमपि युक्तं प्रतिभाति ।

## पाञ्चरात्रागमस्थाः मुख्याः विषयाः—

पाद्मसंहिता तावत् पाञ्चरात्रागमस्थान् विषयान् ज्ञानयोगक्रियाचर्येति चतुर्षु पादेषु विभज्य वर्णयति । नामानुरूपं प्रायः सर्वेष्वपि पाञ्चरात्रागमग्रन्थेषु न्यूनाधिकविस्तारसंकोचरूपेण एते चत्वारः विषयाः सन्ति वर्णिताः । सामान्यतः

---

१. पञ्चेन्द्रियाणि विषयाः पञ्चभूतानि तद्गुणाः ।
पञ्चशब्दाभिधेयानि विद्वांसोऽप्याचिचक्षिरे ।
रा इत्ययमपि प्रोक्तो धातुरादानवाचकः ।
विषयेन्द्रियभूतानामादातारश्च पञ्चशः ।
मनुष्याः पालनात्तेषां पाञ्चरात्रमिति स्मृतम् ।
सांख्ययोगादयः पञ्च रात्रीयन्तेऽस्य सन्निधौ ।
तस्माद्वा पाञ्चरात्रार्थः प्रोच्यते सूरिसत्तमैः ।
अथवा रात्रयो यद्वत् सन्निधौ पञ्चताय वै ।
नीयन्ते तद्वदन्यानि शास्त्राण्येतस्य सन्निधौ ।
इति वा पाञ्चरात्रार्थो विद्वद्भिः क्रियते द्विज ॥

ज्ञानसंबद्धाः ग्रन्थावतारसृष्टिक्रमपाञ्चरात्रिकतत्त्वादयः केचन दार्शनिकविषयाः ज्ञानपादेऽन्तर्भाविताः। ध्यानधारणादयः केचन पातञ्जलयोगसमानाः यौगिक-विषयाः योगपादेऽन्तर्भाविताः भवन्ति। विषयेऽस्मिन् पाञ्चरात्रिकं वैशिष्ट्यं तु ध्यानक्रमे वासुदेवस्य ध्येयत्वेन स्वीकरणं यन्नास्ति दृष्टचरं पातञ्जलयोग-प्रक्रियायाम्[1]। क्रियापादे समूर्तार्चनसम्पादनार्थमावश्यकानां कर्षणादिप्रतिष्ठान्त-विषयाणां विवेचनं तत्र-तत्र पाञ्चरात्रागमग्रन्थेषु द्रष्टुं शक्यम्। तत्र तावत् आलयकल्पनयोग्यभूमिसङ्ग्रहः आलयनिर्माणप्रकारः तस्य विविधाः भेदाः प्रतिमा-निर्माणविधौ स्वीकृतानामनेकविधोपादानद्रव्याणां वर्णनम्, प्रतिमाभेदाः तेषां माननिर्देशपूर्वकं लक्षणनिर्माणप्रक्रियादयश्चेत्यनेके वास्तुशास्त्रीयाः शिल्पशास्त्री-याश्च विषयाः प्रतिपादिताः। अन्तिमे चर्यापादे वैष्णवानां दीक्षा आचारनियमादयः भगवदाराधनसंबद्धाश्च विषया अन्तर्भवन्ति। तत्र प्राधान्येन नित्यनैमित्तिका-राधनानि सामान्यविशिष्टोत्सवप्रक्रियानिरूपणादयश्च वर्तन्ते प्रतिपादिताः।

पाञ्चरात्रागमे वर्णितानां विषयाणां विचारक्रमे डॉ० श्रेडरमहाशयः अत्रत्यान् विषयान् दर्शनमन्त्रशास्त्रयन्त्रशास्त्रमायायोगालयकल्पनप्रतिष्ठाविध्या-ह्निकक्रमवर्णाश्रमव्यवस्थोत्सवविधिवर्णनञ्चेति दशधा विभज्योपस्थापितवान्[2]। वस्तुतः अस्मिन् शास्त्रे एते मुख्याः विषयाः सन्तीति अस्य शास्त्रस्यालोडनेनापि वक्तुं शक्यम्। अत्र त्यक्तेषु पाञ्चरात्रशास्त्रवर्णितविषयेषु मूर्तिकल्पनदीक्षाप्राय-श्चित्तादयः अपि केचन विषया अस्य शास्त्रस्य प्रतिपाद्या अंशाः सन्तीत्यवधेयम्।

**भार्गवतन्त्रम् :--**

भार्गवतन्त्रम् पाञ्चरात्रागमस्य संक्षिप्तानिरुद्धमार्कण्डेयादिसंहितावदल्पा-कारकः ग्रन्थः पञ्चविंशाध्यायेषु १५९८ श्लोकैः पाञ्चरात्रागमस्थान् विषयान् वर्णयति। यद्यप्यत्र ग्रन्थे पाञ्चरात्रागमसम्बद्धाः न सर्वेऽपि विषयाः चर्चिताः तथापि वर्णितानां विषयाणां विविक्ततया स्पष्टं विवेचनं निश्चितमेवास्य तन्त्रस्यान्यतमं वैशिष्ट्यम्। डॉ० स्मीथमहाशयः उपलब्धं भार्गवतन्त्रमपूर्णं मत्वा अस्य ग्रन्थस्य यत्र तत्र समुपलब्धान् अंशान् एकत्रीकृत्य पूर्णतां विधातुं बद्धादरः दृश्यते[3] परन्तूपलब्धग्रन्थस्यादावन्ते च विद्यमानं प्रस्तावनात्मकमुपसंहारात्मकं च भागं समालोच्य ग्रन्थपूर्णताविषये न जायते संशयोदयस्यावसरः। पौष्कर-संहितोक्तदिशा अनेकविधपाञ्चरात्रशास्त्रेष्वन्यतमकल्पात्मके पाञ्चरात्रेऽस्यान्त-र्भावः भवेदिति ग्रन्थस्याल्पपरिमाणत्वं तु न दोषाय। इत्थं कल्पपाञ्चरात्रान्तर्गतः समुपलब्धोऽयं भार्गवतन्त्रग्रन्थः पूर्ण एवेति निश्चेतव्यम्।

---

१. पाद्म. सं० योग पाद. अ. ५. १-४;
   विष्णुतिलक संहिता. ५. ४-५;

२. Introduction to Pancharatra and Ahirbudhnya Samhita Page 26

३. The Smith Agama Collection. Page-91

भार्गवपरशुरामादगस्त्यं प्रत्यागतत्त्वात् तन्त्रमेतत् भार्गवतन्त्रमिति नाम्ना प्रथितं लोके। भवाब्धेरुद्धर्तुकामाः वेदशास्त्राद्यध्ययनानन्तरमपि मलिनान्तःकरणाः तपोधनाः श्रेष्ठाः मुनयः आत्मन उद्धरणोपायं महेन्द्रशिखरे संस्थितं मुनिशार्दूलमगस्त्यं दृष्ट्वा तेनाधीतमनुष्ठितं च तन्मुखात् सुश्रुवुः। पुरा ऋषिभिः देवैश्च संप्रार्थितः अगस्त्यः कण्टकभूतौ वातापील्वलावुभौ राक्षसौ हत्वा हतप्रभः सन् खिन्नमनसा तपस्तप्तुं हिमवन्तं प्राप्य घोरतपसः अनन्तरमात्मोद्धारज्ञापिकां दैवीं वाणीमाकर्ण्य भगवन्तं भार्गवं ययौ। अगस्त्येन श्रद्धया संप्रीणितः संप्रार्थितश्च भगवान् भार्गवः सर्वोद्धारकं सर्वोत्तमोपायभूतं हर्यर्चनातन्त्रात्मकं भार्गवतन्त्रमगस्त्यायोपादिशत्। स एवोपदेशः भार्गवात् प्रपञ्चे आगतत्वात् भार्गवतन्त्रमिति प्रसिद्धम्।

यद्यपि कुत्रचित् भार्गवतन्त्रं भार्गवसंहितेति नाम्नापि दृष्टचरं भवति तथापि उपलब्धमातृकाणामध्यायान्तपुष्पिकासु बहुत्र भार्गवतन्त्रमित्युल्लेखमवलोक्य अस्यात्र तदेव नामास्माभिरपि निर्धारितं स्वीकृतञ्च। केचन मुख्या एव पाञ्चरात्रागमविषयाः अनतिविस्तरेण वर्णिता अत्र। ग्रन्थे प्रश्नोत्तरक्रमेण उत्तरोत्तरं विषयं ज्ञापयितुं भार्गवः अगस्त्यं संचोदयन् आवश्यकान् पाञ्चरात्रागमविषयान् प्रत्यपादयत्। ग्रन्थावतारात्मिकां प्रस्तावनां विधाय शास्त्रपरिचयञ्चोपस्थाप्य क्रमशः आलयकल्पनसम्बद्धान् वास्तुशास्त्रीयान् विषयान् मूर्तिकल्पनसम्बद्धांश्च वषयान् वर्णितवान्। अनन्तरं भगवत्प्रतिमाप्रतिष्ठाङ्गभूताः तत्तद्विषयाः उत्सवनित्याराधनप्रकारजीर्णोद्धारस्नपनविषयाश्च विविक्ततया प्रतिपादिताः। अष्टाक्षरमन्त्रोद्धारवैष्णवभेददैनन्दिनाचारप्रतिपादकपञ्चकालप्रक्रियावर्णनेन सह ग्रन्थः उपसंहृतः। प्रत्यध्यायं ग्रन्थे वर्णितानां विषयाणां संक्षिप्तः क्रमस्त्वित्थम्—

**प्रथमेऽध्याये**—प्रस्तावनात्मकेऽस्मिन् अध्याये पाञ्चरात्ररूपस्य भगवदाराधनतन्त्रस्योपयोगः प्रतिपादितः।

**द्वितीयेऽध्याये**—हर्यर्चनातन्त्रस्य परिमाणम्, तदनुसारं भगवतः समाराधनफलं भगवत आराधनस्य अव्ययसिद्धिदातृत्वञ्च।

**तृतीयेऽध्याये**—आलयनिर्माणोद्देश्यम्, तदर्थं स्वीकार्यस्थलनिर्देशः, पदकल्पनप्रकारः आलयस्याङ्गमानादिनिर्देशः, विंशतिसंख्याकानामालयानां नामकीर्तनं सामान्यलक्षणञ्च। प्राकारस्वरूपादिवर्णनम्। मूलादिबिम्बस्थापनस्य महानसादिकल्पनस्य च स्थाननिर्देशः।

**चतुर्थेऽध्याये**-प्रतिमानिर्माणावसरे उपयोगार्हविविधमानलक्षणनिर्देशः। प्रतिमाभेदाः। विविधदेवप्रतिमानां तत्तदङ्गपरिमाणादिवर्णनम् देवीप्रतिमाकल्पने वैशिष्ट्यं कर्मबिम्बमानादिवर्णनं पीठकल्पनप्रकारनिरूपणञ्च।

**पञ्चमेऽध्याये**—भगवतः प्रतिष्ठाक्रमे आवश्यकानां संभाराणां विवरणम्। यागशालाकुण्डस्रुक्स्रुवद्वारतोरणादीनां निर्माणप्रकारश्च।

**षष्ठेऽध्याये**—प्रतिष्ठायां ग्राह्यकालस्याधिकारिणः आचार्यस्य ऋत्विजश्च वर्णनम्। बिम्बनेत्रोन्मीलनं मृत्संग्रहणं भूमिस्तुतिः अङ्कुरार्पणविधिवर्णनञ्च।

**सप्तमेऽध्याये**—वास्तुपूजाप्रकारः प्रमाणकृतदोषशान्तिनिर्देशः। घृतस्नानम् जलाधिवासप्रकारश्च।

**अष्टमेऽध्याये**—यागमण्डपालङ्करणं नेत्रोन्मीलनप्रकारः प्रतिसरबन्धविधिः स्नपनार्थं तत्तत्कलशस्थापनस्थाननिर्देशः, भगवतः शयनाधिवासः, कुंभादिस्थापनप्रकारश्च।

**नवमेऽध्याये**—कुंभे भगवदाराधनविधिवर्णनं तदङ्गभूतहोमविधिः अक्षरन्यासशक्तिन्यासबलसमर्पणादि प्रतिष्ठाङ्गविषयवर्णनञ्च।

**दशमेऽध्याये**—गर्भगृहे प्रतिमाधारपीठस्थापनक्रमः रत्नन्यासः अष्टबन्धनप्रयोगः बिम्बेषु तत्तद्देवतावाहनं शक्तिनिर्देशः दक्षिणाविध्यादिप्रतिष्ठाङ्गविषयाश्च।

**एकादशेऽध्याये**—महोत्सवकालः ध्वजारोहणाङ्गगरुडार्चनादिप्रकारः ध्वजारोहणं भेरीताडनदेवताह्वानप्रकारश्च।

**द्वादशेऽध्याये**—उत्सवाङ्गाङ्कुरार्पणक्रमवर्णनं यागमण्डपादिकल्पनविधिः देवताराधनं होमप्रकारः बलिदानक्रमः वीथिभ्रमणादिविधिः दैनन्दिनोत्सवक्रमः मङ्गलोत्सवमृगयोत्सवतीर्थोत्सवविधिः ध्वजावरोहणं देवानामुद्वासनं च।

**त्रयोदशेऽध्याये**—मण्डलकल्पनप्रकारः तत्र भगवदाराधनम् मण्डलार्चनाङ्गहोमक्रमः देवतोद्वासनं फलश्रुतिश्च।

**चतुर्दशेऽध्याये**—विवाहोत्सवफलं तदङ्गभूताङ्कुरार्पणप्रकारः विवाहोत्सवविधिः तदङ्गभूतहोमादिक्रमनिरूपणञ्च।

**पञ्चदशेऽध्याये**—विविधप्रतिष्ठासम्बद्धसामान्यविषयाः वाहनविमानमण्डपबलिपीठध्वजवेदिपादुकाघण्टामहानसद्वारदेवतावापीकूपाक्षमालाधूपचण्डादीनां च प्रतिष्ठाक्रमः भक्तबिम्बरथयानप्रतिष्ठाप्रकारश्च।

**षोडशेऽध्याये**—देवालये आराधकेन सम्पाद्यमानभूतशुद्धिमानसयागयोगपीठकल्पनपूर्वकनित्यार्चनक्रमवर्णनम् नित्यार्चनाङ्गभूतहोमनैवेद्यादिकल्पनविधिनिर्देशश्च।

**सप्तदशेऽध्याये**—होमसम्पादनार्थं कुण्डकल्पनवह्निध्यानादिनिर्देशः। अग्नेः सप्तजिह्वानां वर्णनम् अग्निभेदाः तेषामुपयोगश्च। समिधः प्रमाणादयः। होमद्रव्याणि अग्नौ हरेः आराधनं पूर्णाहुतिविधिश्च।

**अष्टादशेऽध्याये**—बलिक्रमे तत्तद्देवानां स्वरतालादिनिर्देशपूर्वकमुत्सवभ्रमणावसरे बलिप्रदानविधिः।

**एकोनविंशेऽध्याये**—जीर्णदेवालयप्रतिमयोः उद्धारे सामान्याः विषयाः। बालालयबालबिम्बकल्पनप्रकारः। बालबिम्बप्रतिष्ठाराधनविधिः। जीर्णबिम्बप्रक्षेपप्रकारः पुनः प्रतिष्ठाक्रमश्च।

**विंशेऽध्याये**—स्नपनभेदाः स्नपनपीठे पदकल्पनं तत्र स्नपनद्रव्यस्थापनक्रमनिर्देशश्च। स्नपनद्रव्यविवरणम्। प्रतिसरबन्धः स्नपनकलशस्थापनं तत्र तत्तद्देवाह्वानार्चनक्रमः। ब्राह्मवैष्णवपुण्यवासुदेवपारमेष्ठ्यप्राजापत्यकौबेरकल्याणापराजितस्नपनानि तेषां फलश्रुतिश्च।

**एकविंशेऽध्याये**—पवित्रारोपणोद्देश्यम्, कालनिर्देशः, पवित्रनिर्माणप्रकारः पवित्रनामानि, पवित्राधिवासप्रकारः, चतुस्स्थानार्चनम्, विविधपवित्रारोपणप्रकारः, होमक्रमः फलश्रुतिश्च।

**द्वाविंशेऽध्याये**—अर्चनक्रमे जायमानदोषनिवारकाणि प्रायश्चित्तानि। बिम्बदोषादौ प्रायश्चित्तानि, अस्पृश्यस्पर्शादौ बिम्बादिपतने च प्रायश्चित्तानि। विविधविघ्ने प्रायश्चित्तानि। पाञ्चरात्रशास्त्रभेदाः सांकर्यनिषेधश्च।

**त्रयोविंशेऽध्याये**—प्रायश्चित्तेषु सामान्यकृत्यम्, संप्रोक्षणावसरः विधिश्च।

**चतुर्विंशेऽध्याये**—अष्टाक्षरमन्त्राधिकारिणः। शुद्धमिश्रयोः सामान्यभेदाः। शुद्धवैष्णवलक्षणम्, दीक्षाभेदः स्वरूपञ्च अष्टाक्षरमन्त्रोद्धारक्रमः, तस्य ऋष्यादिः मन्त्रजपे ध्यानप्रकारश्च। मन्त्रोपयोगः फलश्रुतिश्च।

**पञ्चविंशेऽध्याये**—पञ्चकालविभागः। अभिगमनादिकालानां संक्षिप्तं स्वरूपम्। योगप्रक्रियावर्णनम्। पाञ्चरात्रशास्त्रग्रहणेऽधिकारिणः। शास्त्राध्ययनफलश्रुतिः ग्रन्थोपसंहारश्च।

## भार्गवतन्त्रस्य वैशिष्ट्यम्

इत्थमुपरिनिर्दिष्टक्रमेण तन्त्रेऽस्मिन् मुख्याः पाञ्चरात्रागमविषयाः विविक्ततया प्रतिपादिताः दृश्यन्ते। सामान्यतः एकैकस्मिन् अध्याये प्रायः एकैकः विषयः वर्णितः। ग्रन्थस्य प्रारंभे उपोद्घातात्मकः आवश्यकः हर्यर्चनातन्त्रप्राप्तिविषयः तस्य प्रयोजनं तदर्थमपेक्षितालयकल्पनादिवास्तुशास्त्रीयः ततः परं वर्णनप्राप्ता-

वसरः प्रतिमाकल्पनप्रतिष्ठाक्रमश्चात्युपयुक्तेन व्यवस्थितरूपेण च वर्णितः। विषयवर्णनव्यवस्थापने सर्वत्रौचित्यनिर्वाहः कृतः। यस्य विषयस्य यत्र युक्तियुक्तं वर्णनस्थानं भवेत् तस्य तत्रैव सन्निवेश इत्येतन्महत्त्वपूर्णं वैशिष्टचमस्य ग्रन्थस्य। यद्यपि प्राधान्येन क्रियाविषयप्रतिपादकेऽस्मिन् तन्त्रे दर्शनसम्बद्धतात्त्विकविषयाणामधिकं विवेचनं नावलोक्यते तथापि तत्त्वहोमादिकेषु केषुचिदवसरेषु तत्त्वानां संहृतिक्रमे पृथिव्यप्वह्निमरुदाकाशमनोतन्मात्राहंकृतिबुद्धिप्रकृतिजीवेति तात्त्विकपदार्थाः सन्ति वर्णिताः[१]। अयं विषयः अन्यत्र पाञ्चरात्रग्रन्थेषु एतदपेक्षया विस्तृततया वर्णितः अत्र तु न तथेत्येवात्र मौलिको भेदः। भार्गवतन्त्रे मन्त्रागमतन्त्रान्तरभेदैः चत्वारः पाञ्चरात्रशास्त्रभेदाः स्वीकृताः। तत्र तावत् परिवारयुतं तद्रहितं वा एकमूर्त्यर्चनपरं पाञ्चरात्रशास्त्रं मन्त्रसिद्धान्तान्तर्गतं, परिवाररहितवासुदेवादि चतुर्व्यूहार्चनपरं शास्त्रम् आगमसिद्धान्तान्तर्गतं, वासुदेवादिभिः नरनारायणाभ्यां च सह विष्णुनरसिंहसूकरेति नवमूर्त्यर्चनविधिप्रतिपादकं शास्त्रं तन्त्रसिद्धान्तान्तर्गतं, नृसिंहकपिलक्रोडहंसवागीश्वरादयः द्वित्र्यादिवदनाः परिवारैः सार्धं विनापि वा एकमूर्त्तिश्च यत्र पूज्यत्वेन वर्ण्यते तत्तन्त्रान्तरपाञ्चरात्रागमान्तर्गतमिति। एतेषां चतुर्णां लक्षणमपि[२] निर्दिष्टम्। इत्थमत्रापि प्रायः ईश्वरपारमेश्वरसंहितावदेव पाञ्चरात्रागमशास्त्रस्यावान्तरभेदाः सन्ति वर्णिताः। तत्र वर्णितः विषयः विस्तृतः अत्र तु न तथा। तन्त्रभेदविषयेऽत्र निर्दिष्टमेकमन्यद्वैशिष्टचं द्रष्टव्यम्। तथाहि—"

**वैखानसं पाञ्चरात्रं भार्गवं शैवमित्यपि।**
**तन्त्राण्यमूनि चत्वारि प्रशस्तान्यर्चनाविधौ॥**

२२.९४-९५॥

इति लिखन् ग्रन्थकारः अर्चनातन्त्रस्यान्यत्र सर्वथानुपलब्धं विलक्षणमेव भेदं प्रदर्शयति। निश्चितमेव विचित्रमेतद्वैशिष्टचमस्य ग्रन्थस्य। शुद्धवैष्णवानां लक्षणभेदादिप्रतिपादनावसरे प्रतिपादितः कश्चिद्विलक्षणः विषयः अस्मिन् ग्रन्थे दृष्टिपथमारोहति। तथाहि—एतत्तन्त्रमनुसृत्य पाञ्चरात्रमार्गे प्रवृत्तानां कृते दीक्षायाः दहनादिद्वाराङ्गविशोधनादेः अङ्गन्यासादेश्चावश्यकत्वं न मन्यते तन्त्राचार्यः[३]। एतस्मादेव कारणात् भाषालालित्यादिदृष्टचा सुसमीचीनमपि एतत्तन्त्रम् अन्यान्यपाञ्चरात्रग्रन्थ इव पाञ्चरात्रिकसमाजे गौरवं नालभत मुद्रणं प्रकाशनं चास्य ग्रन्थस्य नाभूदिति[४] डॉ० स्मीथमहाशयस्य मतम्।[५] ग्रन्थेऽस्मिन्

---

१. भार्गवतन्त्रम्. ९.४८-५०;

२. भार्गवतत्रम्. २२.८८-९३;

३. भार्गवतन्त्रम्-२४.२५;

४. Pancharatra catalogues.

५. (i) पाद्म संहिता १. १०६

विषयविवरणसंक्षेपकारणात् स्पष्टतायाः तत्र तत्र अभावोऽनुभूते । यथा तृतीयाध्याये-अङ्गणे पीठिकास्थाने कुमुदादीनां स्थाननिर्देशक्रमः ग्रन्थपठनेन न सम्यक् स्फुटीभवति । तथैवान्यत्र केचन विषयाः अतीव संक्षेपतः वर्णिताः वर्तन्ते ।

पाञ्चरात्रग्रन्थेषु निर्दिष्टपाञ्चरात्रागमग्रन्थसूचिषु अनेकत्रोल्लिखितत्वात् भार्गवतन्त्रस्य प्राचीनत्वविषये न संशयः । तत्र तावत् पञ्चसु पाञ्चरात्रग्रन्थेषु[1] भार्गवतन्त्रस्योल्लेखः दृष्टचरोः भवति । यद्यपि भार्गवतन्त्रस्योपलब्धकोशत्रयमाधृत्य अस्य ग्रन्थस्य कालविषयकं न किमपि आन्तरिकं बाह्यं वा प्रमाणमुपलभामहे तथापि श्रेडरमहाशयस्य मतानुसारम् अष्टमशताब्दात् पूर्वं निर्मिते पाद्मतन्त्रे[2] भार्गवतन्त्रस्योल्लेखमवलोक्य तदपेक्षया भार्गवतन्त्रस्य प्राचीनत्वमनुमीयते । इत्थं निश्चितकालनिर्धारणे आन्तरिकसाक्ष्यस्य अभावे सत्यपि बाह्यसाक्ष्यमनुसृत्य अस्य तन्त्रस्याष्टमशताब्दात् पूर्वकालकल्पितत्वसाधने न दोषं पश्यामः ।

मद्रासराजकीयप्राच्यमातृकागारे स्थितं 'भार्गवतन्त्रप्रयोग' ग्रन्थमाधृत्य भार्गवतन्त्रं प्रति लोके आराधकानां समादरबुद्धिरासीदिति सुकरतयैवानुमातुं शक्यम् । वस्तुतः अङ्गुलगण्यान् एव पाञ्चरात्रशास्त्रग्रन्थान् अवलम्ब्य प्रयोगात्मकाः ग्रन्थाः सन्ति कल्पिताः । तेष्वन्यतमोऽयं भार्गवतन्त्रग्रन्थ इति निश्चितमेवास्य ग्रन्थस्य वैशिष्ट्यं बोधयति । प्रयोगे निर्दिष्टसंक्षिप्तविषयसूच्यन्तर्भाविताः विषयास्तावत् "**प्रतिष्ठाप्रयोगः पाणिग्रहणप्रयोगः, नित्याराधनप्रयोगश्चेति**" । ग्रन्थारंभस्तु —"**अथ श्री भार्गवतन्त्रस्य प्रतिष्ठाप्रयोगः समारभ्यते ज्ञानानन्दमयं ............ हयग्रीवमुपास्महे**" । ग्रन्थस्य समाप्तिपुष्पिका तावत्— "**इति श्री भार्गवतन्त्रप्रयोगः समाप्तः**" इति । इत्थम् प्रयोगग्रन्थस्य प्रारंभं समाप्तिं च दृष्ट्वा अस्यैव भार्गवतन्त्रस्य प्रयोगात्मकः सः प्रयोगग्रन्थ इत्यत्र नास्ति शंकालेशस्यावसरः ।

### भार्गवतन्त्रस्य भाषा

भार्गवतन्त्रस्य भाषा सामान्यतः समीचीना भावाभिव्यक्तौ सर्वत्र समर्था तत्र-तत्र सुमनोहरा हृदयावर्जिका च । भावाभिव्यक्तौ समर्थायामपि भार्गवतन्त्रीयभाषायां सन्ति केचन अपाणिनीयाः विचित्राश्च प्रयोगाः । भाषायामपाणिनीयत्वं वैचित्र्यं च न केवलमत्रैव ग्रन्थेऽपि तु प्रायः सर्वत्र पाञ्चरात्रागमिकग्रन्थेषु दृष्टि-

---

(ii) पुरुषोत्तम संहिता १.

(iii) मार्कण्डेय संहिता. १.५४

(iv) विश्वामित्र सं० २.

(v) विष्णु तन्त्रम्. १.;

पथमारोहति । प्रसङ्गेऽस्मिन् स्थालीपुलाकन्यायेन सन्ति केचन प्रयोगाः द्रष्टव्याः । तथाहि—

१. सुबन्तप्रयोगे अपाणिनीयं रूपम्—'तिथ्यः' अ० ६. श्लो० २२; 'सर्वात्' २५.३०;
२. कृत्प्रत्ययनियमोल्लङ्घनम्—'स्थाप्य' ३.४३-४४;
३ लिङ्गव्यत्यासः—'स्थानाः' ३.३९; 'भेदानि' ४.१;
४. विशेष्यविशेषणयोः परस्परं लिङ्गव्यत्यासः—'संकमेखलम्' ५.१६;
५. कारकप्रयोगे वैचित्र्यम्—'आर्द्रां तु बन्धुनाशः स्यात् १७.३९;

## संस्करणे आधारभूताः मातृकाः सम्पादनक्रमश्च

अस्य भार्गवतन्त्रसंस्करणस्य सम्पादने आधारतया तिस्रो मातृकाः सन्ति स्वीकृताः । तिस्रः अपि मातृकाः पूर्णाः । परन्तु सम्पादनावसरे प्रतिकृतिरूपाः (Transcription) एव समुपलब्धाः । तासां सङ्केतप्रदर्शनपूर्वकं विवरणं तु अधोलिखितम्--

१. A सङ्केतसंकेतितः अडचारगवेषणाकेन्द्रस्थायाः (Adyar Rsaerch center) No—43042 मातृकायाः प्रतिलेखः ( Transcription ) पूर्णः पाठश्च समीचीनः ।

२. M. सङ्केतनिर्दिष्टः मद्रासराजकोयप्राच्यमातृकागारस्थायाः (Madras Gevt. oriantal Mss Library) R. 1733 (a) ग्रन्थाक्षरे 143 पुटात्मकमातृकायाः प्रतिलेखः, पूर्णः शुद्धः समीचीनश्च पाठः, $110\frac{3}{4} \times 9\frac{1}{2}$ इंच परिमितं मानम् । प्रतिपृष्ठं २० पंक्तयः ।

३. T. सङ्केतेन निर्दिष्टः तिरुपतिनगरे सम्पादकेनोपलब्धः प्रतिलेखः । पूर्णः पाठश्च सामान्यतः शुद्धः समीचीनश्च । मूलमज्ञातम् ।

प्रतिलेखेषु न किमप्यान्तरिकं बाह्यं वा तादृशं दृढं प्रमाणमुपलभामहे यदाश्रित्य यस्य कस्यापि कोशस्य मूलकोशत्वं कल्पितं भवेत् । अथापि M. T. कोशयोः परस्परं पाठसाम्यादिकमवलोक्य उभयोः कश्चित् संबन्धः भवेदिति अनुभूयते । तत्र T. कोशः कदाचित् M. कोशस्य प्रतिलेख इति सूक्ष्मेक्षिकया उभयोः पाठपर्यालोचनेनानुमीयते । A. कोशस्थः पाठः सर्वापेक्षया शुद्धः समीचीनश्चेति कारणात् अत्र संस्करणे A. कोश एव मूलकोशत्वेन स्वीकृतः । परन्तु अन्यत्र कोशद्वयोः उपलब्धः समीचीनतरः पाठः न सर्वथोपेक्षितः । तत्र तत्र तुलनात्मकदृष्ट्या त्रयाणामपि कोशानां पाठं समालोच्य प्रकरणानुगुणं समीचीनतमः पाठः मूले स्वीकृतः । पाठान्तरप्रदर्शनक्रमे कोशेषूपलब्धानां सर्वथाऽपरिवर्तितरूपग्रहणे सर्वत्र श्रद्धाप्रदर्शिता । पाठकानां सौकर्येण पाठाववोधाय प्रतिपादितविषय-

प्रकृत्यनुरूपं यथास्थानं शीर्षकाणि निवेशितानि । पाठान्तरप्रदर्शने सौलभ्यं विधातुं श्लोकस्थाः प्रथमादिपादाः a: b: c: d: इत्यनेन रूपेण क्रमशः चतुर्धा विभज्य निर्दिष्टाः । पाञ्चरात्रशास्त्रीयगवेषणकर्मणि कृतादराणाम् सौकर्याय ग्रन्थान्ते कानिचन परिशिष्टानि निवेश्य श्लोकानां प्रथमपादस्याकाराद्यनुक्रमणिका संयोजिता । यान्त्रिकासौविध्यकारणात् मुद्रणक्रमे केषांचित् स्वरवर्णानां संयुक्ताक्षराणां च समायोजने दृष्टचराः दोषाः प्रयत्नानन्तरपि अपरिहार्याः अभूवन् । मुद्रणादौ जातान् दोषान् परिहर्तुं शुद्धिपत्रे प्रयत्नः विहितः ।

## कृतज्ञताज्ञापनम्

सर्वविधसौविध्यं प्रकल्प्य अस्य ग्रन्थस्य हृदयावर्जकप्रकाशनं कृतवद्भ्यः उदारहृदयेभ्यः विद्यापीठीयप्राचार्येभ्यः श्रीमद्भ्यः डाक्टर गयाचरण त्रिपाठिवर्येभ्यः सादरं कार्तज्ञ्यं समर्प्यते । एतादृशसारस्वतानुष्ठानवेलायां सुरभारतीसमाराधने मम प्रवर्तकानां पूज्यपितृचरणानां श्रीमतां पण्डितरामजीवन चौधरीशर्मणां, भारतीयसंस्कृतेः वास्तुशास्त्रस्य मूर्तिकलायाश्चाकररूपे संस्कृतक्षेत्रे समुपेक्षिते पाञ्चरात्रागमक्षेत्रे कार्यं कर्तुं अस्मत् प्रवर्तकानां श्रद्धेयगुरुवर्याणां डॉ० बी० आर० शर्ममहाशयानां च चरणेषु प्रणामाञ्जलयः समर्प्यन्ते । सम्पादनक्रमे उपकृतवद्भ्यः विद्यापीठेऽस्मिन् प्रवाचकपदमलङ्कुर्वद्भ्यः सुहृद्वर्येभ्यः डॉ० किशोरनाथ झा महाशयेभ्यः व्याख्यातृपदमारूढेभ्यः डॉ० जगन्नाथपाठकमहोदयेभ्यः डॉ० गोपराजू राम महानुभावेभ्यश्च हार्दिकान् धन्यवादान् वितरामि । ग्रन्थमातृकोपलब्ध्यादौ सर्वदा सोत्साहमुपकृतवन्तः विद्यापीठसंग्रहाध्यक्षाः अस्माकं सुहृदः पण्डित श्री जीवेश्वरझाशर्माणः धन्यवादार्हाः सन्तिः । अनुष्ठानेऽस्मिन् उपकारकान् तत्तत्सङ्ग्रहालयान् पुस्तकागारान् प्रत्यपि स्वकीयं धन्यवादं ज्ञापयामि । ग्रन्थस्य मनोरममुद्रणादौ बद्धपरिकराः प्रयागस्थविष्णु आर्ट मुद्रणालयव्यवस्थापकाः तत्कर्मसम्पादकाश्च सन्ति धन्यवादार्हा इतिशम् ।

**गंगा नाथ झा केन्द्रीय संस्कृत विद्यापीठम्.**
इलाहाबाद —२
(१६.३.१९८१ ई०)

**राघव प्रसाद चौधरी**
प्राध्यापकः

---





# विषयानुक्रमणिका

## अध्याय—१

### [भार्गवतन्त्रस्य प्रयोजनप्रतिपादनाध्यायः]

पृ० १-७

मङ्गलाचरणम् [श्लोक १ ]—प्रास्ताविकम् [२-१२]—हिमालये अगस्त्यतपश्चर्या आकाशवाणी श्रवणं च [१३-१४]—हरेः आराधनमहत्त्वं मुनेः महेन्द्रगिरिगमनाय निर्देशश्च [१५-१७]—अगस्त्यस्य महेन्द्रगिरिगमनम् [१८-१९]—परशुरामस्य वर्णनम् [२०-२२]—अगस्त्यकृता परशुरामस्तुतिः [२३-४०]—अगस्त्यागमनहेतुकः प्रश्नः अभयप्रदानं च [४१-४५]—अगस्त्येन स्वागमनहेतुनिवेदनम् [४६-५५]—भगवदाराधनतन्त्रश्रवणस्य पाप नाशकत्वम् [५६-६०]—हर्यर्चनातन्त्रविषये अगस्त्योत्थापितजिज्ञासा [६१].

## अध्याय—२

### [तन्त्रविवरणपूर्वकवासुदेवाराधनफलादिनिरूपणाध्यायः]

पृ० ८-११.

तन्त्रविवरणम् [श्लो० १-६]—शास्त्रविधिना हरेः आराधनफलम् [७-११]—देवालयादिकल्पनस्य तत्तदाराधनादेश्च फलकीर्तनम् [१२-३०]—वासुदेवध्यानस्य सिद्धिप्रदातृत्वम् [३१].

## अध्याय—३

### [देवालयकल्पनप्रयोजनस्थानादिनिरूपणाध्यायः]

पृ० १२-१७.

—भगवदालयकल्पनविषयकजिज्ञासा [श्लो० १]—भगवदालयनिर्माणस्य प्रयोजनद्वयम् [२-३]—भगवदालयकल्पनयोग्यस्थाननिर्देशः [४-१८]—विंशतिसंख्याकानामालयानां परिगणम् [१९-२१]—देवालयस्य सामान्यं लक्षणम् [२१-२२]—आलयकल्पनक्रमे अर्धमण्डपाद्यायामादिः [२३-२७]—मूलबिम्बादिस्थापनस्थाननिर्देशः [२७-२८]—द्वारपालस्थाननिर्देशः [२८-३१]—परिवारदेवस्थाननिर्देशः [३१-४२]—आलये द्वितीयावरणस्थपरिवारदेवानां स्थानानि [४२-४८]—आलये महानसादिस्थाननिर्देशः [४९-५०]—त्रिविधं वैष्णवविमानम् [५१.].





**अध्याय—४**

## [प्रतिमाङ्गमानादिनिरूपणाध्यायः]

पृ० १८-२९.

—प्रतिमानिर्माणविषये सामान्यजिज्ञासा [१]—रेण्वादिमानविशेषाणां लक्षणम् [२-६]—उपादानद्रव्यभेदानुसारं सप्तविधानि बिम्बानि [७]—बिम्बोत्सेधविषये उत्तमः पक्षः [८-९]—प्रतिमायाः तत्तदङ्गमाननिर्देशः [१०-१६]—बिम्बोत्सेधविषये मध्यमः पक्षः [१७-१९]—बिम्बोत्सेधविषये अधमः पक्षः तत्तदङ्गविस्तारादिकं च [१९-८२]—प्रतिमायाः आभूषणानां विवरणम् [८३-८८]—भगवतः प्रतिमायाः आसीनादिस्वरूपविवेकः [८८-८९]—प्रतिमायाः स्थापनस्थानविवेकः [८९-९०]—देवीप्रतिमास्थापनस्थाननिर्देशः [९१-९२]—देव्याः संख्याविचारः [९३]—देवीनां मूर्तिकल्पने विशेषः [९४-९८]—देवीप्रतिमायाः आभूषणादिनिर्देशः [९९-१०२]—उत्सवादिप्रतिमोत्सेधादिविवरणम् [१०२-१०४]—अङ्गबिम्बकल्पनविचारः [१०४-१११]—पीठकल्पनप्रकारः [१११-११९]—विमाने कीलकल्पनाद्यवसरः [११९-१२०].

**अध्याय—५**

## [प्रतिष्ठाङ्गसंभारविवरणाध्यायः]

पृ० ३०-३४.

—प्रतिष्ठाक्रमे मण्डपादीनां कल्पनादिविषये जिज्ञासा [१]—मण्डपकुण्डस्वरूपादिनिर्देशः [२-११]—कुण्डमेखलाकल्पनप्रकारः [१२-१४]—कुण्डेयोनिकल्पनप्रकारः [१४-१६]—प्रपादिकल्पनक्रमनिर्देशः [१७-१९]—स्रुक्स्रुवोः कल्पनप्रकारः [१९-२१]—तोरणस्नानपीठादिकल्पनक्रमः [२२-२४]—पादुकादिसंभाराणां विवरणम् [२५-४५].

**अध्याय—६**

## [प्रतिष्ठाविषयविवेचनाध्यायः]

पृ० ३५-४१.

प्रतिष्ठाविषयकजिज्ञासोपस्थापनम् [१-२]—प्रतिष्ठाक्रमे यजमानलक्षणम् [३-६]—प्रतिष्ठाक्रमे आचार्यस्य लक्षणम् [७-९]—प्रतिष्ठासम्पादनार्थमृत्विगादिविचारः [१०-११]—आचार्यवरणक्रमे निषिद्धाः [१२-१३]—आचार्यवरणक्रमः [१४-१५]—प्रतिष्ठाक्रमे ग्राह्याग्राह्यकालविवेकः [१६-२७]—अङ्कुरमृत्संग्रहणात् पूर्वं सम्पादनीयानि

कृत्यानि [२८-३५]—अंकुरार्थं मृत्संग्रहक्रमः [३६-४४]—मृत्सङ्ग्रहक्रमे भूस्तुतिः [४५-५० ]—मृत्सङ्ग्रहमन्त्रनिर्देशः [५०-५१ ]—मृदानयनं गुर्वादिसम्माननं च [५१-५५]—पालिकास्थापनमङ्कुरधान्यसंस्कारः तत्तद्देवताराधनञ्च [५६-५८]—होमप्रकारः [६८-७०]—बीजावापरक्षणादिप्रकारः [७०-७४].

**अध्याय ७**

**[वास्तुपूजाबिम्बिजलाधिवासविवरणाध्यायः]**

पृ० ४२-४५.

—वास्तुपूजायाः प्रयोजननिर्देशः [१-२]—वास्तुपूजाप्रकारः [३-७]—वास्तुपूजाङ्गहोमः वास्तुशेषपरित्यागादिकञ्च [८-१३]—मानादिप्रयुक्तदोषशान्तिप्रकारः [१४-१९]—बिम्बाधिवासक्रमे घृतस्नानप्रकारः [२०-२५]—जलाधिवासप्रकारः [२५-४३].

**अध्याय—८**

**[प्रतिष्ठाङ्गभूतप्रतिमानेत्रोन्मीलनादिनिरूपणाध्यायः]**

पृ० ४६-५१.

—यागमण्डपालङ्करणप्रकारः [१-५]—अधिवासितबिम्बोत्थापनं यागमण्डपानयनञ्च [६-११]—प्रतिमानयनोन्मीलनक्रमः [११-२१]—प्रतिसरबन्धनावसरनिर्देशः [२१-२२]—प्रतिसरपरिकल्पनम् [२३-२४]—कौतुकसंस्कारः कौतुकबन्धनप्रकारश्च [२४-३२]—स्नपनकुंभानां स्थापनक्रमः [३३-३७]—होमाभिषेचनक्रमः [३८-३९]—बिम्बाधिवासनप्रकारः [४०-४३]—कुंभस्थापनप्रकारः [४४-५५].

**अध्याय—९**

**[प्रतिष्ठाङ्गकुंभार्चनादिविधिनिरूपणाध्यायः]**

पृ० ५२-६१

—कुंभतोरणाद्याराध्यदेवताविवेकः [१-१२]—तत्तद्वेदपारायणस्थाननिर्देशः [१२-१३]—कुंभे भगवदर्चनं होमप्रकारश्च [१३-२०]—भगवतः वासुदेवस्य ध्यानप्रकारः [२१-३५[—तत्तद्देवानां होमक्रमनिर्देशः [३६-४०]—होमक्रमे समिधादिविवेकः [४१-४६]—तत्त्वहोमविधिः [४७-५२]—मकाराद्यक्षरतत्त्वानां प्रतिमाङ्गेषु न्यासक्रमः [५३-६६]—प्रतिमायां शक्तिनिवेशप्रकारः [६६-७२]—चण्डादिपरिवाराणाम् अधिवासनादिविधिः [७३-७७]—एकबेरबहुबेरप्रतिष्ठाविधौ विशेषः [७७-८०]—बलिसमर्पणविधिः [८०-९२]—प्रतिष्ठास्थानात् गन्तुं बलिदेवप्रार्थनाक्रमः [९३-

९५]—पिण्डिकाद्यधिवासः तदङ्गभूतहोमश्च [९६-९७]—प्रतिसरबन्धः पूर्णाहुतिक्रमः मङ्गलसूचकलक्षणानि च [९८-१००]—रात्रियापनक्रमः [१०१].

## अध्याय—१०

### [प्रतिष्ठाक्रमे प्रतिमापीठस्थापनादिनिरूपणाध्यायः]

पृ० ६२-६९.

—गर्भगृहे भगवदानयनम् अधारशिलास्थापनञ्च [१-३]—आधारपीठगर्ते वीजरत्नन्यासक्रमः [४-९]—पिण्डिकायां लक्ष्म्याः आवाहनमर्चनं च [१०]—विम्वार्थं पीठार्थं रत्नन्यासार्थञ्च स्वीकार्याः शिलाः [११]—गर्भगृहे पिण्डिकायुक्तबिम्बस्य निवेशः तत्स्थापनञ्च [१२-१८]—पिण्डिकाप्रतिमयोः संयोजनम् अष्टबन्धकल्पनप्रकारश्च [१९-२१]—मूलबिम्बे परिवारदेवताबिम्बेषु च भगवतः आवाहनम् [२२-३१]—बहुबेरप्रतिष्ठाविधौ ध्रुवादिबिम्बानां स्थाननिर्देशः [३२-३४]—प्रतिष्ठाङ्गभूतकर्मसम्पादनस्थाननिर्देशः [३५-३६]—प्रतिष्ठाक्रमे कुंभन्यासविधिः [३७-३८]—मूलबिम्बे शक्तिनिवेशप्रकारः [३८-४३]—कर्मबिम्बादिषु शक्त्यावाहनक्रमः [४४-४७]—गुर्वादिभ्यो दक्षिणादानादिनिर्देशः [४७-५५]—दक्षिणारहितयागस्य फलराहित्यकथनम् [५६]—प्रतिष्ठाकर्मणः समाप्तौ देशिकस्य गृहानयनम् [५७-५८]—प्रतिष्ठासम्पादकस्य सहायकानां च कृते फलकीर्तनम् [५९-६७]—यागदर्शनमाहात्म्यम् [६७-६८]—प्रतिष्ठान्ते भगवतः स्नपनस्य महोत्सवस्य च निदेशः [६८-६९].

## अध्याय—११

### [महोत्सवाङ्गध्वजारोहणादिनिरूपणाध्यायः]

पृ० ६९-७४.

—महोत्सवविधिनिरूपणार्थं प्रार्थना [१]—महोत्सवमाहात्म्यम् महोत्सवदिनावधिश्च [२-४]—ध्वजपटे गरुडस्य स्वरूपं तदक्षिमोचनं च [४-८]—गरुडस्य कुंभादीनां च अधिवासनम् [९-१२]—गरुडाधिवासनाङ्गहोमक्रमः [१३-१४]—गरुडावाहनार्चनप्रकारः [१४-२१]—उत्सवाङ्गध्वजारोहणविधिः [२२-३६]—ध्वजारोहणाङ्गब्राह्मणसम्माननम् [३६]—उत्सवप्रतिमापूजनक्रमः [३७]—भेरीताडनदेवताह्वानप्रकारः [३८-५१]—प्रत्याह्वानक्रमः [५२]—उत्सवक्रमे देवताह्वानाङ्ग बलिनिवेदनम् [५३-५५].

## अध्याय—१२

### [उत्सवविधिनिरूपणाध्यायः]

पृ० ७५-८६.

उत्सवाङ्गभूताङ्कुरार्पणकालः [१]—उत्सवक्रमे प्राकारादीनां शोधनं भूषणं च [२-३]—यागमण्डपवेदिकुण्डकल्पनप्रकारः [४-८]—उत्सवार्थमाचार्यादिवरणादिकम् [८-९]—उत्सवार्थं देवाधिवासप्रकारः [१०-१३]—अधिवासानन्तरं मण्डपे देवस्य स्नपनमर्चनञ्च [१४-१९]- उत्सवक्रमे प्रतिसरबन्धप्रकारः [१९-२२]—कुंभन्यासः तत्र तत्तद्देवानामर्चनक्रमश्च [२२-२६]— यागमण्डपे वेदपारायणादिक्रमः [२७-२८]— यागमण्डपे तत्तद्धोमकुण्डे तत्तद्देवोद्देश्यकहोमक्रमः [२८-४९]—उत्सवक्रमे बलिदान-प्रकारः [४०-४५]—उत्सवप्रसङ्गे वीथिकासु भगवतः परिक्रमणप्रकारः [४६-५४]—वीथिपरिक्रमणानन्तरं मन्दिरे भगवत आराधनम् [५४-५७]—भगवतः दैनन्दिनोत्सवक्रमः [५८-६१]—भगवतः मङ्गलोत्सवक्रमः [६२-७३]—मङ्गलोत्सवक्रमे जलद्रोण्यां भगवतः स्नपनप्रकारः[ ७४-८८]—भगवतः मृगयोत्सवविधिः [८८-९३]—तीर्थयात्रार्थ-मनुज्ञाप्रार्थनं प्रतिसरबन्धनं च [९४-९७]—तीर्थयात्राक्रमे भगवतः अभिषेकक्रमः [९७-१०१]—तीर्थं प्रति भगवतः आनयनं तत्र स्नानफलकीर्तनम् [१०७-१०८]—तीर्थस्नपना-नन्तरं भगवतः अर्चनमानयनं च [१०८-१०९]—उत्सवक्रमे ब्राह्मणभोजनविधानम् [१०९-११०]—उत्सवान्तस्नपनं हविर्निवेदनं तत्तद्धोमप्रकारः अग्निविसर्जनं च [११०-११३]— गरुडाराधनं तदुद्वासनं ध्वजावरोहणं च [११३-११५]—आवाहितदे-वोद्वासनम् [११५-११६]—आलये तत्तत्स्थाने उत्सवादिबिम्बानां निवेशः आराधकगमनं च [११७-११८].

## अध्याय—१३

### [मण्डलकल्पनपूर्वकपुष्पयागविधिनिरूपणाध्यायः]

पृ० ८७-९२.

—मण्डलकल्पनात्पूर्वं भगवतः आराधनम् [१-२]—मण्डलवेदिकाकल्पनप्रकारः [-३ ४]—मण्डलकल्पनार्थं सूत्रपातविधिः [१५]—कर्णिकादिपञ्चक्षेत्रविभागक्रमः [६-८]—मण्डलद्वारक्षेत्रकल्पनप्रकारः [८-९]—मण्डले द्वादशाब्जनिर्माणस्थाननिर्देशः [१०]—मण्डलकोणेषु पाञ्चजन्यकल्पननिर्देशः [११]—कर्णिकाक्षेत्रे द्वादशबिन्दुकल्पननिर्देशः [१२]— मण्डलेऽब्जस्य केसरादिपदनिर्माणप्रकारः [१२-१४]— मण्डलेऽरकल्पनप्रकारः [१५-१६]—मण्डले वर्णकल्पनार्थमुपादानद्रव्याणि [१७-१८]— अब्जकर्णिकादीनां वर्ण-कल्पनम् [१९-२५]—चक्रमण्डलस्य वर्णकल्पनप्रकारः [२५-२६]—मण्डले भगवतः आराधनम् अनुज्ञायाचनं च [२६-३१]—मण्डले तत्तद्देवानाम् आराधनस्थानविधिनिर्देशः

[३१-४१]—मण्डले भगवतः पुष्पार्चनविधिः [४२-४४]—मण्डलार्चनक्रमे होमविधिः [४४-४५]—मण्डलस्थदेवोद्वासनादिक्रमः [४६-४८]—महोत्सवान्ते गुरोः सम्माननम् [४९-५०]—महोत्सवफलश्रुतिः [५१-५४].

**अध्यय—१४**

**[विवाहोत्सवनिरूपणाध्यायः]**

पृ० ९३-९९.

प्रयोजनं विधिं च वर्णयितुम् अगस्त्यस्य प्रार्थना [१]—उद्वाहोत्सवस्य फलकीर्तनम् [२-४]—विवाहोत्सवक्रमे अङ्कुरार्पणदिनम् [५]—देवस्य देव्याश्च कल्याणमण्डपे आनयनम् [५-७]—अङ्कुरार्पणविधिनिरूपणम् [७-१३]—कौतुकबन्धप्रकारः [१३-१५]—रक्षाविधिः [१६-१७]—शुभिकाबन्धनविधिः पुष्पमालिकाबन्धनविधिश्च [१७-१९]—पाणिग्रहणविधिनिरूपणक्रमे प्रोक्षणप्रकारः [२०-२३]—यज्ञोपवीतकल्पनं पादयोः अक्षतार्पणं च [२४]—मधुपर्कनिवेदनापोशनक्रमः [२५-२७]—गोविसर्जनप्रकारः [२७-२८]—अन्ननिवेदनक्रमः [२९]—भगवते देव्याः दानप्रकारः [३०-४४]—उद्वाहहोमप्रकारः [४५-४८]—लाजाहोमप्रकारः प्रायश्चित्ताहुत्यादिप्रकारश्च [४८-५२]—विवाहोत्सवक्रमे दैनन्दिनकृत्यम् [५२ ५४]—विवाहोत्सवाङ्गचतुर्थदिनकृत्यम् [५४-५७]—पञ्चमदिनकृत्यम् [५८]—देवीनां विवाहविधिः [५९].

**अध्याय—१५**

**[विविधप्रतिष्ठाविधिनिरूपणाध्यायः]**

पृ० १००-१०४.

विष्व्यादिदेवानां विमानादीनां च प्रतिष्ठाक्रमविषयकः प्रश्नः [१-३]—विविधप्रतिष्ठाक्रमे सामान्यविषयाः [४]—स्वतन्त्रपरतन्त्रप्रतिष्ठयोः कुंभसंख्यादिविचारः [५-७]—वाहनादिप्रष्ठिाक्रमे विशेषः [८-१४] विमानमण्डपादीनां प्रतिष्ठाक्रमे विशेषः [१५-१९]—बलिपीठप्रतिष्ठाक्रमे विशेषः [२०-२२]—ध्वजप्रतिष्ठायां विशेषः [२२-२३]—वेद्याः प्रतिष्ठाक्रमे विशेषः [२४]—पादुकायाः घण्टायाश्च प्रतिष्ठाक्रमे विशेषः [२५]—महानसप्रतिष्ठायां विशेषः [२६]—द्वारदेवताप्रतिष्ठायां विशेषः [२७]—वापीकूपादिप्रतिष्ठायां विशेषः [२८-३१]—अक्षमालाप्रतिष्ठाक्रमे विशेषः [३२-३४]—धूपादीनां प्रतिष्ठाक्रमे विशेषः [३५]—चण्डादिदेवानां हेतीनां च प्रतिष्ठाक्रमे विशेषः [३६]—भक्तबिम्बप्रतिष्ठाविधिः [३७-३९]—रथादियानप्रतिष्ठायां विशेषः [३९-४०]—गृहार्चाप्रतिष्ठाक्रमः तत्फलञ्च [४१]—मन्दिरे देवस्थापनफलम् [४२].

**अध्याय—१६**

## [समाराधनविधिनिरूपणाध्यायः]

पृ० १०५-११२.

आराधकस्यालयप्रवेशक्रमः [१]—कवाटोद्घाटनं भगवत्प्रबोधनञ्च [२-१०]—निर्माल्यविनियोगः पात्रप्रक्षालनं च [१०-११]—भूतशुद्धिप्रकारः [१२-२२]—अङ्गेषु वर्णन्यासक्रमः [२३-२५]—मानसयागविधिः [२६-२८]—पूजापात्रादिसन्नाहः [२९-३५]—योगपीठकल्पनप्रकारः [३५-४४]—भगवतः नित्यार्चनविधिः [४५-५५]—नित्यार्चनक्रमे नैवेद्यसमर्पणप्रकारः [५५-५९]—नित्याराधनक्रमे होमादिसम्पादननिर्देशः [६०]—नित्यार्चनप्रसङ्गे नीराजनोद्वासनादिक्रमः [६१-६४]— भगवन्निवेदितान्नविनियोगः [६४-६६]—चण्डादिनिवेदितान्नविनियोगादिः [६६-६८].

**अध्याय—१७**

## [अग्निकार्यनिरूपणाध्यायः]

पृ० ११३—१२०.

होमसम्पादनात्पूर्वं कर्तव्यानि कृत्यानि [१-२६]—होमक्रमे वह्न्यादिध्यानस्वरूपम् [२७-२९]—वह्नेः सप्तजिह्वानां नामस्थानादिविवेकः [२९-३५]—अग्नित्रयलक्षणं तेषामुपयोगश्च [३९-३८]—समिधः प्रमाणं दोषयुक्तसमिधः प्रयोगफलनिर्देशश्च [३८-४१]—कामनानुरूपं समिधां होमद्रव्याणां च विवरणम् [४१-४८]—तत्तद्धोमद्रव्यपरिमाणनिर्देशः [४९-५३]—अग्निकुण्डे हरेः आवाहनमाराधनञ्च [५३-५६]—अग्नौ नित्याराधनविध्यादौ विशेषः [५७-६०]—पूर्णाहुतिसम्पादनविधिः [६०-६७]—पूर्णाहुतिविधिः [६८-७५].

**अध्याय—१८**

## [नित्योत्सवबलिसमर्पणविधिनिरूपणाध्यायः]

पृ० १२१-१२४

अग्निकार्यसम्पादनानन्तरमुत्सवाचरणनिर्देशः [१]—नित्योत्सवक्रमे बलिद्रव्यानयनक्रमः [२-६]—बलिदानक्रमनिर्देशः [७-१०]—तत्तद्देवानां स्वरनृत्ततालादिविवेकः [१०-२३]—उत्सवभ्रमणे बलिदानक्रमः [२३-२७]—द्वारपालादिभ्यः बलिदानादिविधिः [२८-३०]

## अध्याय—१९

### [जीर्णोद्धारविधिनिरूपणाध्यायः]

पृ० १२५-१२९

—जीर्णोद्धारावसरः [१]—सन्धानानर्हे बिम्बादौ विधिः [२-३] – सन्धानावसरे भगवतः आराधनस्थलम् [४]—अजीर्णधामबिम्बत्यागनिषेधः [५-६]—विमानादि-जीर्णोद्धारक्रमे शक्त्यावाहनव्यवस्था [६-८] – बालालयकल्पनविवेकः [९-११]—बाल-बिम्बकल्पनप्रकारः [१२-१३]—अङ्गवैकल्यशान्त्यर्थं होमक्रमः [१४-१६]—बालबिम्ब-स्थापनक्रमे आचार्यवरणक्रमः [१७-१८]—बालबिम्बप्रतिष्ठाराधनक्रमः [१९-३१]—जीर्णबिम्बप्रक्षेपप्रकारः [३२-३५]—संस्कारानन्तरं पुनः प्रतिष्ठाक्रमः [३५-३९].

## अध्याय—२०

### [ स्नपनविधिनिरूपणाध्यायः ]

पृ० १३०-१४२

स्नपनभेदनिर्देशः [१-२]—ब्राह्मादिस्नपनलक्षणम् [३]—स्नपनपीठकल्पन-प्रकारः [४-८]—ब्राह्मपदे स्थापनीयानि स्नपनद्रव्याणि [९]—दैवपदे स्थापनीयानि स्नपनद्रव्याणि [१०-११] – मानुषे पदे स्थाप्यानि स्नपनद्रव्याणि [११-१३]—रत्नोदक-द्रव्यपरिगणनम् [१४-१५] —फलोदकद्रव्यपरिगणनम् [१५-१६]—लोहोदकद्रव्याणि [१६-१७]—मार्जनद्रव्याणि [१८-१९]—गन्धोदकद्रव्याणि [१९-२०]—षडक्षत-द्रव्याणि [२१]—यवाम्बुद्रव्याणि [२२] – पाद्यद्रव्याणि [२३-२४]— अर्घ्यद्रव्याणि [२४-२५]—आचामभाजने निक्षेप्यद्रव्याणि [२६-२७]—पञ्चगव्यद्रव्याणि [२७-२८]—कषायोदकद्रव्याणि [२८-२९]—शान्तिकुंभमङ्गलोदकद्रव्याणि [३०-३३]—सर्वौषधिजलद्रव्याणि [३४-३५]—सर्वगन्धोदकद्रव्याणि [३५-३८]—मूलौषधि-द्रव्याणि [३९-४०]—मकरन्दादिस्नपनद्रव्यपरिमाणम् [४१-४२] – चूर्णकुंभद्रव्याणि ४२]—मृत्तिकोदकद्रव्याणि [४३-४५]—प्रतिसरबन्धः शयनक्रमश्च [४६-४७]—स्नानमण्डपे स्नपनबिम्बादिस्थापनम् [४८-५३]—स्नपनकलशेषु तत्तद्देवानामावाहना-दिक्रमः [५४-६४]—अग्निहोममन्त्राणां निर्देशः [६४ ७०]— ब्राह्मस्नपनविधिनिर्देशः [७१-७४]—वैष्णवस्नपनविधिनिर्देशः [७४-७६]—पुण्यस्नपनविधिनिर्देशः [७७-८२]—हरिद्रामृत्तिकास्नपनमंत्रनिर्देशः [८३]—महास्नपनभेदाः [८४]—वासुदेव-स्नपनविधिः [८५-८९]—पारमेष्ठ्यस्नपनविधिः [९०-९३]—प्राजापत्यस्नपनविधिः [९४-९८]—कौबेरस्नपनविधिः [९८-१०१]—कल्याणस्नपनप्रकारः [१०२-३]—अपराजितस्नपनस्य ऐन्द्रस्नपनस्य च स्वरूपम् [१०३-१०६]—स्नपनजलस्नानादि-फलश्रुतिः [१०६-१०८]—स्नपने पादुकातीर्थादिप्रदाननिर्देशः [१०९].

## अध्याय--२१

### [ पवित्रारोपणविधिनिरूपणाध्यायः ]

पृ० १४३-१४९

कर्मसु जायमानदोषपरिहारविषयकः प्रश्नः [१-२]—पवित्रारोपणस्य दोषपरिहारोपायत्वम् [३]--पवित्रारोपाणार्थं कालनिर्देशः [४-६]—पवित्रोपादानद्रव्यसन्नाहः [७-१०]—पवित्रमानं ग्रन्थिसंख्या च [१०-१२]--दशपवित्राणां नामानि लक्षणञ्च [१३-२०]--परतन्त्रविम्बानां पवित्रमाननिर्देशः [२०-२१]—पवित्रनिर्माणविधिः [२०-२५]—पवित्रोत्सवसम्पादनार्थमनुज्ञायाचनम् [२६-२९]—पवित्राधिवासनविधिनिर्देशः [३०-४०] —पवित्रोत्सवक्रमे भगवतः चतुःस्थानार्चनम् [४०-४४]---पवित्रारोहणप्रकारः [४४-४६] --पवित्रोत्सवद्वितीयदिनकृत्यम् [४७-४९]—पवित्रोत्सवक्रमे होमविधिः [४९-५४]—मण्डलादीनां पवित्रैः भूषणप्रकारः [५१-५८]—अपराह्णे भगवन्तं प्रति क्षमाप्रार्थनम् [५८-६३]—उत्सवक्रमे दैनन्दिनकृत्यम् महोत्सवदिवसश्च [ ६३-६५ ]--पवित्रारोहणे वैकल्पिकमन्त्रः [ ६५ ]—पवित्रारोहणफलश्रुतिः [६६].

## अध्याय– २२

### [ विविधप्रायश्चित्तनिरूपणाध्यायः ]

पृ० १५१-१६२.

पूजावैकल्यादौ निष्कृतिविषयकः प्रश्नः [१]—अशुद्धदेहेन सम्पादिते अर्चने प्रायश्चित्तम् [२-५]--अशुद्धपादादिसमर्चने प्रायश्चित्तम् [५-६]— श्वसनादिपूर्वकसम्पादिते अर्चने प्रायश्चित्तम् [६-७]—लोमादिस्पर्शनादिपूर्वकभगवदर्चने प्रायश्चित्तम् [७-८]—रजस्वलावस्त्रादिस्पर्शानन्तरं सम्पादिते अर्चने प्रायश्चित्तम् [९-११]—मलमूत्रादिरूषिते बिम्बे भगवदर्चने निष्कृतिः [१२-१३]—दुष्टान्ननिवेदने प्रायश्चित्तम् [१३-१५]—अत्युष्णादिहविर्निवेदने प्रायश्चित्तम् [१६]— शवादिदूषिते ग्रामे प्रायश्चित्तम् [१७]—पूजारंभानन्तरं मरणाशौचे विधिः [१८-१९]--निवेदितस्य अन्यस्मै निवेदिते प्रायश्चित्तम् [२०]—अन्यदेवार्चनप्रयुक्तसाधनोपयोगे प्रायश्चित्तम् [२१-२२]--कृम्यादिदूषितपुष्पाद्युपयोगे प्रायश्चित्तम् [२२-२३]—समर्पितावशेषोपयोगे प्रायश्चित्तम् [२३-२४]—पूजायां पर्युषितोदकोपयोगे प्रायश्चित्तम् [२४-२५]—मलादिदुष्टवस्तुप्रयोगे प्रायश्चित्तम् [२५-२६]—कूपदोषे प्रायश्चित्तम् [२६-२७]—विहितोपचारभङ्गे प्रायश्चित्तम् [२७-२८] पूजावैकल्यादौ प्रायश्चित्तम् [२८-२९]—पूजाकालवैकल्ये प्रायश्चित्तम् [३०-३५]--अशास्त्रीयपूजादौ प्रायश्चित्तम् [३५-३७]—अग्निदोषे प्रायश्चित्तम् [३७-३९]—परिवारार्चननाशादौ प्रायश्चित्तम् [३९-४०]—

बलिद्रव्यबलिबिम्बपतने प्रायश्चित्तम् [४१-४२]—अज्ञातजातिचौरैः स्पृष्टेबिम्बे प्रायश्चित्तम् [४३]—मृण्मयादिबिम्बदोषे प्रायश्चित्तम् [४४]—अस्पृश्यैः स्पृष्टे बिम्बे प्रायश्चित्तम् [४५-४७]—वैश्यादिभिः गर्भगृहप्रवेशे प्रायश्चित्तम् [४८-५१]—शूद्रादिसम्पादिते कर्मणि प्रायश्चित्तम् [५२-५४]—मन्दिरे चण्डालादिप्रवेशे प्रायश्चित्तम् [५४-५६]—खद्योतस्पर्शादौ प्रायश्चित्तम् [५७-६२]—चण्डालादिकलशादिस्पर्शे प्रायश्चित्तम् [६२-६५]—स्नपनादौ बिम्बपतने प्रायश्चित्तम् [६६-६९] चाण्डालादिभिः पालिकादिस्पर्शे प्रायश्चित्तम् [७०]—अङ्कुरे अप्राशस्त्यादौ प्रायश्चित्तम् [७१-७२]—ग्रामादिरहितमन्दिरे प्रायश्चित्तम् [७२]—महोत्सवे वर्षादिभिः शैथिल्ये प्रायश्चित्तम् [७३-७४]—उत्सवे विघ्ने संजाते प्रायश्चित्तम् [७४-७७]—तीर्थयात्राहीने उत्सवे प्रायश्चित्तम् [७८]—उत्सवबिम्बचौर्यादौ विधिः प्रायश्चित्तञ्च [७८-८१]—कर्माधिकृतजने विघ्निते विधिः [८१-८२]—पवित्रादिन्यूनाधिक्ये प्रायश्चित्तम् [८३]—जलाधिवासहीनप्रतिष्ठायां प्रायश्चित्तम् [८४]—क्लेशवासावध्यतिक्रान्ते प्रायश्चित्तम् [७५-८६]—सिद्धान्तानां परस्परसांकर्ये प्रायश्चित्तम् [८७]—मन्त्रसिद्धान्तस्वरूपम् [८८]—आगमसिद्धान्त स्वरूपम् [८९]—तन्त्रसिद्धान्तस्वरूपम् [९०-९१]—तन्त्रान्तरसिद्धान्तस्वरूम् [९१-९३]—सिद्धान्तादीनां परस्परसांकर्यनिषेधः [९३-९४]—तन्त्रचतुष्टयं सांकर्यदोषः एकत्रैकस्यैव ग्राह्यत्वञ्च [९४-९९]—अज्ञाताधिकारिजीर्णमन्दिरादौ प्रायश्चित्तम् [१००]—अज्ञाताधिकारिमन्दिरादौ पूजालोपादौ प्रायश्चित्तम् [१०१-१०२]—तन्त्रान्तरानुसारं भगवतः आराधनावसरः [१०३-१०५]—भगवदाराधनादौ सिद्धान्तादीनां व्यतिक्रमनिषेधः [१०६-१०७]—गृहार्चाक्रमे पूजालोपे प्रायश्चित्तम् [१०८-११०]—सालग्रामशिलापूजावैकल्यादौ प्रायश्चित्तम् [१११].

**अध्याय—२३**

**[ सम्प्रोक्षणनिरूपणाध्यायः ]**

पृ० १६३-१६५.

—सर्वत्र प्रायश्चित्तेषु सामान्यकृत्यानि [१-७]—सम्प्रोक्षणावसरः [८-१०]—सम्प्रोक्षणसन्नाहः [१०-१६]—सम्प्रोक्षणाङ्गहोमविधिः प्रोक्षणप्रकारश्च [१६-२०]—ब्राह्मणादिसम्माननं दक्षिणाप्रदानं च [२१].

**अध्याय—२४**

**[ अष्टाक्षरमन्त्रनिरूपणाध्यायः ]**

पृ० १६६-१७१.

—रामस्य माहात्म्यकीर्तनं कार्तज्ञ्यज्ञापनञ्च [१-८]—अष्टाक्षरमंत्राधिकारित्वविषये जिज्ञासा [८-९]—अष्टाक्षरमन्त्राधिकारिलक्षणम् [१०-१६]—शुद्धमिश्रयोः

सामान्यभेदः [१७-१८]—शुद्धवैष्णवानां लक्षणमाचारश्च [१९-२७]––दीक्षया योग्यतोत्पादनं मुख्यादीक्षा च [२७-३५]––जघन्यायाः दीक्षायाः स्वरूपम् [३६-४०]––अष्टाक्षरमन्त्रोद्धारप्रकारः [४१-४४]––अष्टाक्षरमन्त्रस्य ऋष्यादिनिर्देशः [४५-५०]—अष्टाक्षरमन्त्रजपात् पूर्वं ध्येयं भगवत्स्वरूपम् [५१-५५]—अष्टाक्षरमन्त्रोपयोगः तस्य फलश्रुतिश्च [५५-५८].

## अध्याय—२५

### [ पञ्चकालप्रक्रियानिरूपणाध्यायः ]

पृ० १७२-१७६

—वैष्णवानां कृते पञ्चकालपरत्वनिर्देशः [१] – पञ्चकालविभागक्रमः [२-३]—अधिगमनादिविधीनां संक्षिप्तवर्णनम् [३-१०]—योगप्रक्रियानिर्देशः [११-१८]––निद्रास्वीकारप्रकारः [१९-२०]––निद्रास्वीकाराभावे विकल्पः अष्टाक्षरमंत्रजपफलञ्च [२१-२३]—अस्य शास्त्रस्य ग्रहणे अधिकारिणः [२४-२६]––अस्य शास्त्रस्याध्ययन फलश्रुतिः [२६-२९]––पाञ्चरात्रोपदेशानन्तरं रामस्यान्तर्ध्यानत्वम् [२९-३२]—विष्णवाराधनफलकीर्तनं ग्रन्थोपसंहारश्च [३३-३७].



# भार्गवतन्त्रम्

## प्रथमोऽध्यायः

### [ भार्गवतन्त्रस्य प्रयोजनप्रतिपादनाध्यायः ]

[ मङ्गलाचरणम् ]

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥१॥

[ प्रास्ताविकम् ]

अगस्त्यं मुनिशार्दूलं महेन्द्रशिखरे स्थितम् ।
प्रणम्य प्रयताः भूत्वा पप्रच्छुर्मुनिपुंगवाः ॥२॥

मुनयः

भगवन् मुनिशार्दूल सर्वशास्त्रविशारद ।
कथमद्य वयं सर्वे तीर्णास्स्म भवसागरात् ॥३॥

अधीतान्यपि शास्त्राणि समधीता त्रयी पुनः ।
तथापि निर्मलं नैव मनोऽस्माकं मुनीश्वर ॥४॥

कथं वयं समुत्तीर्णा भविष्यामो भवाम्बुधेः ।
उपायमद्य नो ब्रूहि येन यामोऽक्षयं पदम् ॥५॥

---

A. M. आदौ अधोलिखितां पंक्ति निर्दिशति—
"श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः ।

१. c: A. भूतानाम् For विद्यानाम्
M. कोशे प्रथमश्लोकानन्तरम् अधोलिखितः अधिकः पाठः उपलभ्यते—
"वन्दे लक्ष्मीपतिं देवं शङ्खचक्रगदाधरम् ।
विद्यामूर्तिं हयग्रीवं शब्दार्थज्ञानलब्धये ॥
अमृताध्मातमेघाभममृताभरणं विभुम् ।
पाञ्चरात्रागमाचार्यं वन्दे वैकुण्ठभूपतिम् ॥ श्री भार्गवसंहिताप्रारंभः ॥"

२. d: A. पपृच्छुः for पप्रच्छुः

एतच्छ्रुत्वा महातेजाः स्वयं स्वायंभुवो मुनिः ।
ऋषिभ्यो वक्तुमारेभे स्वधीतं च स्वनुष्ठितम् ॥६॥

अगस्त्यः

पुरा खलु मया रक्षो जीर्णितं श्राद्धभोजने ।
वातापिरिल्वलः पश्चात् कुपितः सोऽपि मारितः ॥७॥

अहो रक्षोद्वयं नष्टं मया खलु तपस्यता ।
ताभ्यां नष्टं तपोऽस्माकं किं कुर्म इति चिन्तयन् ॥८॥

हिमवन्तमुपासाद्य देवगन्धर्वसेवितम् ।
विसर्पिगाङ्गसलिलं सिद्धविद्याधरार्चितम् ॥९॥

शङ्करज्योतिषाश्लिष्टं पार्वतीतोषकारिणम् ।
नारायणमहायोगिचरणाम्बुजमुद्रितम् ॥१०॥

पुण्यगन्धवहोपेतं पुरुहूतादिवन्दितम् ।
पुरत्रयोपसंहारे चापरूपधरं परम् ॥११॥

फलपुष्पभरानम्रवृक्षषण्डसमाकुलम् ।
अनेकाश्रमसंकीर्णममलं हरिमन्दिरम् ॥१२॥

[ हिमालये अगस्त्यतपश्चर्या आकाशवाणीश्रवणं च ]

अत्युग्रं तप आतिष्ठं निराहारो जितेन्द्रियः ।
वर्धमाने तदा घोरे तपस्यघहरेऽद्भुते ॥१३॥

आकाशवाणीमश्रौषमतिगम्भीरवादिनीम् ।
स्वल्पाक्षरां च बह्वर्थां परिणामसुखावहाम् ॥१४॥

[ हरेः आराधनमहत्त्वं, मुनेः महेन्द्रगिरिगमनाय निर्देशश्च ]

आराधितो यदि हरिस्तपसा किं प्रयोजनम् ।
नाराधितो यदि हरिस्तपसा किं प्रयोजनम् ॥१५॥

---

७. d: A. मारुतः for मारितः;

१५. श्लोकादुपरि 'आकाशवाणी' इत्ययं अंशः M. T. कोशे अधिकः ।

१५. A. om. c: d:;

अन्तर्बहिर्यदि हरिस्तपसा किं प्रयोजनम् ।
नान्तर्बहिर्यदि हरिस्तपसा किं प्रयोजनम् ॥१६॥

तपसो विरम ब्रह्मन् महेन्द्रं व्रज पर्वतम् ।
तत्र रामं समासाद्य तस्मात् सुखमवाप्नुहि ॥१७॥

[ अगस्त्यस्य महेन्द्रगिरिगमनम् ]

एतच्छ्रुत्वाम्बराद्वाणीं मनःश्रुतिसुखप्रदाम् ।
विरम्य तपसो भूयो दक्षिणां दिशमभ्यगाम् ॥१८॥

ततो महेन्द्रमासाद्य पुण्यगन्धर्वसेवितम् ।
रामं कमलपत्राक्षमद्राक्षमृषिभिः सह ॥१९॥

[ परशुरामस्य वर्णनम् ]

तप्तचामीकरनिभं पिङ्गश्मश्रुजटाधरम् ।
वल्कलाजिनसंवीतं ज्वलत्परशुधारिणम् ॥२०॥

तपन्तमिव चादित्यं शीतयन्तं मृगाङ्कवत् ।
भासयन्तं जगत्सर्वं वासुदेवप्रभौघवत् ॥२१॥

भान्तं ब्रह्म श्रियातीव श्रिया नारायणो यथा ।
भारत्या परमेष्ठीव शर्वो गिरिजया यथा ॥२२॥

[ अगस्त्यकृता परशुरामस्तुतिः ]

जामदग्न्यं तमालोक्य रामं सर्वाङ्गसुन्दरम् ।
मुदा परमयोपेतः शिरसा समवन्दिषम् ॥२३॥

कृत्तो वनस्पतिरिव पातितो धरणीतले ।
विग्रहो मे मुनिश्रेष्ठाः रामस्य पदपद्मयोः ॥२४॥

अनुज्ञातः समुत्थाय तोषयामास तं प्रभुम् ।
उच्चैः स्वरं समासाद्य पुण्डरीकाक्षविद्यया ॥२५॥

---

१६. c: A. नाराधितो for नान्तर्बहिः;

१७. a: A. विरह for विरम;

२१. b: A. प्रतांक; M. मृगाङ्ग for मृगाङ्क;

२२. a: T. A. श्रित्या for श्रिया;

२३. d: A. समवादिषम् for समवन्दिषम्;

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥२६॥

नमस्ते वासुदेवाय शान्तानन्दचिदात्मने ।
अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ॥२७॥

महाविभूतिसंस्थाय नमस्ते पुरुषोत्तम ।
सहस्रशिरसे तुभ्यं सहस्रचरणाय ते ॥२८॥

सहस्रबाहवे तुभ्यं सहस्रनयनाय ते ।
अमूर्ताय नमस्तुभ्यमेकमूर्ताय ते नमः ॥२९॥

अनेकमूर्तये तुभ्यमक्षराय च ते नमः ।
व्यापिने वेदवेद्याय नमस्ते परमात्मने ॥३०॥

चिन्मात्ररूपिणे तुभ्यं नमस्त्रैयन्तमूर्तये ।
अणिष्ठाय स्थविष्ठाय महिष्ठाय च ते नमः ॥३१॥

नेदिष्ठाय दविष्ठाय क्षेपिष्ठाय च ते नमः ।
वरिष्ठाय वसिष्ठाय कनिष्ठाय च ते नमः ॥३२॥

पञ्चात्मने नमस्तुभ्यं सर्वान्तर्यामिणे नमः ।
कल्पनाक्रोडरूपाय सृष्टिस्थित्यन्तहेतवे ॥३३॥

नमस्ते गुणरूपाय गुणरूपानुवर्तिने ।
व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ॥३४॥

आदिमध्यान्तशून्याय तद्वते च नमो नमः ।
प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥३५॥

लोकयात्राप्रसिद्ध्यर्थं स्रष्टृब्रह्मादिरूपिणे ।
नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥३६॥

---

२७. b: M. शान्तोनन्त for शान्तानन्द;

३१. a: A. मन्त्र for मात्र;
b: M. त्रय्य for त्रैय;
c: A. अन्विष्ठाय for अणिष्ठाय;

३४. b: A. अनुवृत्तिने for अनुवर्तिने;

३६. A. om. a: b:,
b: M. सृष्टृ for स्रष्टृ;

विपाकैः कर्मणां क्लेशैरस्पृष्टवपुषे नमः ।
नमो ब्रह्मण्यदेवाय तेजसां निधये नमः ॥३७॥

नित्यासाधारणानेकलोकरक्षापरिच्छदे ।
सच्चिदानन्दरूपाय वरेण्याय नमो नमः ॥३८॥

यजमानाय यज्ञाय यष्टव्याय नमो नमः ।
इज्याफलात्मने तुभ्यं नमः स्वाध्यायशालिने ॥३९॥

नमः परमहंसाय नमः सर्वगुणाय ते ।
स्थिताय परमे व्योम्नि भूयो भूयो नमो नमः ॥४०॥

[ अगस्त्यस्यागमनहेतुकः प्रश्नः अभयप्रदानं च ]

एवं स्तुतो जगन्नाथो रामः कमललोचनः ।
अवेक्ष्य कृपया देवो मामुवाच जगत्प्रभुः ॥४१॥

रामः

किमर्थं कुंभतनय महेन्द्रं समुपागतः ।
भीतिवद्भासि योगीन्द्र कुतस्ते भयमागतम् ॥४२॥

इन्द्राद्वा वरुणाद्वापि ब्रह्मणो वा त्रिलोचनात् ।
साक्षान्नारायणाद्वापि न ते भूयादितो भयम् ॥४३॥

वैवस्वतो वा रक्षांसि दानवा वा सपन्नगाः ।
विप्रियं यदि कुर्युस्ते गतिस्तेषां परश्वधः ॥४४॥

तस्मादभीतवत्स्थित्वा ब्रूहि कार्यं ससंभ्रमम् ।
साधयाम्यहमद्यैव दर्शनं मे शुभोदयम् ॥४५॥

[ अगस्त्येन स्वागमनहेतुनिवेदनम् ]

इत्युक्तो जामदग्न्येन भीतवत् कुंभसंभवः ।
यथावद्वक्तुमारेभे रामायामिततेजसे ॥४६॥

---

३७. b: A. आधुष्ट for अस्पृष्ट;

३९. a: A. यज्याय for यज्ञाय;

न भीतिः ब्रह्मणो देव न विष्णोर्न च शङ्करात् ।
नापि जिष्णोर्न च यमात् वरुणाद्वापि राक्षसात् ॥४७॥

राक्षसेभ्योऽपि न भयं न देवेभ्यो न चासुरात् ।
नान्येभ्यश्च भयं मेऽद्य भीतः पापादिहागतः ॥४८॥

वातापिरिल्वलश्चोभौ राक्षसौ ऋषिकण्टकौ ।
तौ हन्तुमर्थितो देवैः ऋषिभिश्च महात्मभिः ॥४९॥

दत्तं मयाभयं तेभ्यो वधे राक्षसयोस्तयोः ।
निश्चितं मे मनः पश्चाद्रक्षसापि निमन्त्रितः ॥५०॥

राक्षसस्य पितुः श्राद्धे सम्पन्नमपि पृष्टवान् ।
उक्तं मयास्तु सम्पन्नं जठरे पिण्डतां गतः ॥५१॥

जीर्णोऽभून्मम वातापिस्ततः कुपित इल्वलः ।
मुष्टिना हन्तुमारेभे मां मया हुंकृतिः कृता ॥५२॥

तेन दग्धोऽभवद्रक्षः सर्वं तेन हृतं तपः ।
तेन खिन्नोऽगमं शैलं तपसे हिमभूषितम् ॥५३॥

अत्युग्रं तप आतिष्ठं वाणी काप्यशरीरिणी ।
तपसानेन किं ते स्यात् रामेण भव निर्भरः ॥५४॥

तत उत्थाय तपसः त्वामद्य शरणं गतः ।
अनागसं मां भगवन् कृत्वा समवलोकय ॥५५॥

[ भगवदाराधनतन्त्रश्रवणस्य पापनाशकत्वम् ]

एतच्छ्रुत्वा वचो देवो भगवान् भार्गवो मुनिः ।
प्रत्युवाच ततः प्रीतो मैत्रावरुणये प्रभुः ॥५६॥

---

४७. c: A. T. om. च,
५०. d: T. वि° for °पि;
५५. c: M. ममां for मां;
५६. a: T. M. ततो for वचो;
d: T. M. भृगुः for प्रभुः;

रामः

ऋषीणामग्निकल्पानां देवानां प्रीतये त्वया ।
वातापिरिल्वलश्चोभौ नाशितौ ते तपो बलात् ॥५७॥

निश्शल्या ऋषयश्चापि देवाश्चासन् त्वयानघ ।
तदर्थं च तपस्तप्तं भवता हिमवत्तटे ॥५८॥

अस्मदालोकनेनैव पूतोऽभूर्मुनिपुङ्गव ।
तपोधनक्षयभयं न ते भवति दारुणम् ॥५९॥

या चासीद्धृदये शङ्का रक्षो नाशनिमित्तजा ।
तां च हर्यर्चनातन्त्रं श्रुत्वा नाशय कुम्भज ॥६०॥

[ हर्यर्चनातन्त्रविषये अगस्त्योत्थापितजिज्ञासा ]

अगस्त्यः

किं तद्धर्यर्चनातन्त्रं तन्त्रं तत्कथमागतम् ।
सर्वं निरवशेषेण उपदेष्टुं त्वमर्हसि ॥६१॥

॥ इति श्री भार्गवतन्त्रे प्रथमोऽध्यायः ॥

———

५९. b: M. अभूत् for अभूः;
६०. a: A. M. यदासीत् हृदये for या चासीद्धृदये;
c: A. तं तां M. तत्तां for तां च;

न भीतिः ब्रह्मणो देव न विष्णोर्न च शङ्करात् ।
नापि जिष्णोर्न च यमात् वरुणाद्वापि राक्षसात् ॥४७॥

राक्षसेभ्योऽपि न भयं न देवेभ्यो न चासुरात् ।
नान्येभ्यश्च भयं मेऽद्य भीतः पापादिहागतः ॥४८॥

वातापिरिल्वलश्चोभौ राक्षसौ ऋषिकण्टकौ ।
तौ हन्तुमर्थितो देवैः ऋषिभिश्च महात्मभिः ॥४९॥

दत्तं मयाभयं तेभ्यो वधे राक्षसयोस्तयोः ।
निश्चितं मे मनः पश्चाद्रक्षसापि निमन्त्रितः ॥५०॥

राक्षसस्य पितुः श्राद्धे सम्पन्नमपि पृष्टवान् ।
उक्तं मयास्तु सम्पन्नं जठरे पिण्डतां गतः ॥५१॥

जीर्णोऽभून्मम वातापिस्ततः कुपित इल्वलः ।
मुष्टिना हन्तुमारेभे मां मया हुंकृतिः कृता ॥५२॥

तेन दग्धोऽभवद्रक्षः सर्वं तेन हृतं तपः ।
तेन खिन्नोऽगमं शैलं तपसे हिमभूषितम् ॥५३॥

अत्युग्रं तप आतिष्ठं वाणी काव्यशरीरिणी ।
तपसानेन किं ते स्यात् रासेण भव निर्भरः ॥५४॥

तत उत्थाय तपसः त्वामद्य शरणं गतः ।
अनागसं मां भगवन् कृत्वा समवलोकय ॥५५॥

[ भगवदाराधनतन्त्रश्रवणस्य पापनाशकत्वम् ]

एतच्छ्रुत्वा वचो देवो भगवान् भार्गवो मुनिः ।
प्रत्युवाच ततः प्रीतो मैत्रावरुणये प्रभुः ॥५६॥

---

४७. c: A. T. om. च,

५०. d: T. वि° for °पि;

५५. c: M. ममां for मां;

५६. a: T. M. ततो for वचो;
d: T. M, भृगुः for प्रभुः;

रामः

ऋषीणामग्निकल्पानां देवानां प्रीतये त्वया ।
वातापिरिल्वलश्चोभौ नाशितौ ते तपो बलात् ।।५७।।

निश्शल्या ऋषयश्चापि देवाश्चासन् त्वयानघ ।
तदर्थं च तपस्तप्तं भवता हिमवत्तटे ।।५८।।

अस्मदालोकनेनैव पूतोऽभूर्मुनिपुङ्गव ।
तपोधनक्षयभयं न ते भवति दारुणम् ।।५९।।

या चासीद्धृदये शङ्का रक्षो नाशनिमित्तजा ।
तां च हर्यर्चनातन्त्रं श्रुत्वा नाशय कुम्भज ।।६०।।

[ हर्यर्चनातन्त्रविषये अगस्त्योत्थापितजिज्ञासा ]

अगस्त्यः

किं तद्धर्यर्चनातन्त्रं तन्त्रं तत्कथमागतम् ।
सर्वं निरवशेषेण उपदेष्टुं त्वमर्हसि ।।६१।।

।। इति श्री भार्गवतन्त्रे प्रथमोऽध्यायः ।।

———

५९. b: M. अभूत् for अभूः;
६०. a: A. M. यदासीत् हृदये for या चासीद्धृदये;
c: A. तं तां M. तत्तां for तां च;

# द्वितीयोऽध्यायः

## [ तन्त्रविवरणपूर्वकवासुदेवाराधनफलादिनिरूपणाध्यायः ]

### [ तन्त्रविवरणम् ]

श्रीरामः

अक्षय्यसंख्यं तन्त्रं तत् परस्मिन् ब्रह्मणि स्थितम् ।
सार्धकोटिप्रमाणेन जग्राह भगवान् विधिः ॥१॥

नारदोऽपि च जग्राह कोटचर्धं ब्रह्मणो मुनिः ।
कपिलोऽपि मुनिः पञ्च लक्षमात्रमुपाहरत् ॥२॥

वैनतेयोऽपि जग्राह पादलक्षं जनार्दनात् ।
विंशत्सहस्रं जग्राह पूजातन्त्रं हरेः फणी ॥३॥

चत्वारिंशत्सहस्राणि विखना मुनिरग्रहीत ।
लक्ष्मीः षष्टिसहस्राणि लक्षमेकं वसुन्धरा ॥४॥

शुकः पञ्च सहस्राणि सहस्रं सप्ततेर्हरः ।
चतुर्दश सहस्राणि भगवान् स पराशरः ॥५॥

विष्वक्सेनोऽपि जग्राह ग्रन्थं लक्षद्वयं हरेः ।
अन्ये च बहवः कामं जगृहुर्मुनिपुङ्गवाः ॥६॥

### [ शास्त्रविधिना हरेः आराधनफलम् ]

असंख्यातमिदं शास्त्रं हरेर्जठरपूरितम् ।
संग्रहेणाद्य ते वच्मि तेन पूतो भविष्यसि ॥७॥

---

१. b: अन्तरं M. कोशे 'ग्रहीतारः' इत्यधिकः ।

४. a: M. सहस्रेण for सहस्राणि;
M. om. b: c:

६ c: M. कामात् for कामं;
d: M. जग्रहुः for जगृहुः;

तेन शास्त्रविधानेन पूजयस्व रमापतिम् ।
तेन सर्वं लयं याति कलुषं कलशोद्भव ॥८॥

स्मरणं कीर्तनं विष्णोः पूजनं पादवन्दनम् ।
प्रदक्षिणं दर्शनं च सर्वाघौघविनाशनम् ॥९॥

एकैकमपि पर्याप्तं सर्वपापापनोदने ।
किं पुनर्बहवो यस्य सः पुमान् हरिरेव हि ॥१०॥

यद्यदिच्छन् धिया विष्णुं सेवते भक्तिसंयुतः ।
तस्य तत्तत्करतले नात्र कार्या विचारणा ॥११॥

[ देवालयादिकल्पनस्य तत्तदाराधनादेश्चफलकीर्तनम् ]

यस्तु विष्णुगृहं कुर्यात् वैकुण्ठं तस्य मन्दिरम् ।
यस्तु बिम्बं हरेः कुर्यात् स तु विष्णौ लयं व्रजेत् ॥१२॥

येन पीठानि कल्प्यन्ते स याने चरते दिवि ।
यच्छत्रं चामरं पीठं पादपीठं तथाम्बरम् ॥१३॥

अन्यान्युपचाराणि करोति कमलापतेः ।
स तु तैस्तैस्तथाकाशे निर्मलेऽम्मरसेविते ॥१४॥

देवैः पर्युपचर्यन्ते स नाघेन विलिप्यते ।
कासारवापिकाकूपतटाकादि करोति यः ॥१५॥

स भूयात् सततं शान्तः स न तापेन लिप्यते ।
कवचायुधभूषास्रक् किरीटादि करोति यः ॥१६॥

उद्यानानि च रम्याणि धरणीं सस्यमालिनीम् ।
सभां च मण्डपं रम्यं सर्वं तस्य परेऽम्बरे ॥१७॥

---

८. d: T. A. कमलोद्भव for कलशोद्भव; अस्य श्लोकस्यानन्तरं M. कोशे 'फलम्' इत्यधिकः ।

१४. a: M. अन्यान्यपि उपचाराणि;
d: A. T. अम्बर for अमर;

१५. b: A. नालेन for नाघेन;

१६. a: b: c: d: M. om.

नैवेद्यं विविधं भक्ष्यं भोज्यं लेह्यं च पानकम् ।
उत्पादयति पश्चात् स सुधाशी भवति ध्रुवम् ॥१८॥

अनिच्छन्नखिलं भोगं यः प्रीत्या कुरुते क्रियाः ।
स भवेदमले धाम्नि परस्मिन्नेव लीयते ॥१९॥

यः सदा देवसदने ध्यायन्नास्ते मुदा हरिम् ।
पुनर्न मातुर्जठरे निवसेत्कलसोद्भव ॥२०॥

पानीयं देवदेवाय यो ददाति गतस्पृहः ।
मातुः स्तन्यं न पिबति पुनः कलससंभव ॥२१॥

तालवृन्तेन देवेशं यो वीजयति भक्तिमान् ।
स न तापत्रयैर्लिप्येतेति शास्त्रविनिर्णयः ॥२२॥

गन्धं ददाति यो भक्त्या नरके स न मज्जति ।
आमोदयति यः सद्म स स्वर्गे मतुह्यीयते ॥२३॥

दद्याच्च यो अम्बरं विष्णोः नग्नत्वं तस्य नोच्यते ।
आलोक्य हृष्टो विष्णुं यः स सालोक्यं समश्नुते ॥२४॥

दीपान् प्रदीपयेद्यस्तु तद्धचानविषयो हरिः ।
मार्जनालेपनैर्यान्ति पापानि विलयं ध्रुवम् ॥२५॥

तोरणैरङ्गवल्याद्यैः मण्डयन् देवमन्दिरम् ।
सर्वदा मण्डितो भूयाद्वैकुण्ठे देवमन्दिरे ॥२६॥

वेदैरङ्गैस्तथा स्तोत्रैस्तोषयेद्यदि शार्ङ्गिणम् ।
सर्वदा तोषितः सर्वैः भवेद्वैकुण्ठसद्मनि ॥२७॥

गीतं नृत्यं तथा वाद्यं कारयेद्यो हरेः प्रियम् ।
स तेन तेन भवति परितुष्टः परे पदे ॥२८॥

———————————

२०. d: A. T. कमलोद्भव for कलशोद्भव;
२१. d: A. T. कमल for कलश;
२३. b: A. M. न स for स न;
२५. a: T. M. प्रदापयेत् for प्रदीपयेत्;
२६. c: M. सर्वथा for सर्वदा;
२८. a: M. नृत्तं for नृत्यम्;
c: M. सते नते for स तेन तेन;

अनन्तशयने देवे परमानन्दविग्रहे ।
अचला परमा भक्तिर्यस्य स ब्रह्मभाजनम् ॥२९॥

भगवद्भक्तियुक्तेषु भक्तिमान् यो भवेन्नरः ।
स भवेद्भगवत्प्राणस्तस्य स्थानं भवेद्धरिः ॥३०॥

[ वासुदेवध्यानस्य सिद्धिप्रदातृत्वम् ]

ततस्त्वं शार्ङ्गधन्वानं वासुदेवं सनातनम् ।
ध्यायस्व सततं चित्ते तेन ते सिद्धिरव्यया ॥३१॥

॥ इति भार्गवतन्त्रे द्वितीयोऽध्यायः ॥

---

३१. d: A. न ते सिद्धिरनव्यया;

# तृतीयोऽध्यायः

## [ देवालयकल्पनप्रयोजनस्थानादिनिरूपणाध्यायः ]

### [ भगवदालयकल्पनविषयकजिज्ञासा ]

अगस्त्यः

भगवन् भार्गव श्रीमन् सर्वकल्याणविग्रह ।
हरिमन्दिरनिर्माणं कथं कुर्याज्जगत्प्रभो ॥१॥

### [ भगवदालयनिर्माणस्य प्रयोजनद्वयम् ]

श्रीरामः

कृत्वा प्रभूतं सलिलमारामान् विनिवेश्य च ।
देवतायतनं कुर्यात् यशोधर्माभिवृद्धये ॥२॥

इष्टापूर्तेन लभ्यन्ते ये लोकास्तान् बिभूषता ।
देवानामालयः कार्यो द्वयमप्यत्र दृश्यते ॥३॥

### [ भगवदालयकल्पनयोग्यस्थाननिर्देशः ]

सलिलोद्यानयुक्तेषु कृतेष्वकृतकेषु च ।
स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः ॥४॥

सरस्सु नलिनीच्छत्रनिरस्तरविरश्मिषु ।
हंसांसाक्षिप्तकल्हारवीचीविमलवारिषु ॥५॥

हंसकारण्डवक्रौञ्चचक्रवाकविराविषु ।
पर्यन्तनिचुलच्छायाविश्रान्तजलचारिषु ॥६॥

---

प्रारंभे M. कोशे—'तृतीयोध्याय प्रारंभः । श्रीमते हयग्रीवाय परमात्मने नमः । मन्दिरनिर्माणम् ।'' इति पाठः ।

२. b: T. M. आरामानि निवेश्य च;

५. a: M. नफेनी for नलिनी;

६. d: A. M. वारिषु for °चारिषु;

क्रौञ्चक्रौञ्चीकलापाश्च कलहंसकलस्वनाः ।
फुल्लनीरद्रुमोत्तंसास्सङ्गमश्रेणिमङ्गलाः ॥७॥

पुलिनाभ्युन्नतोरस्था हंसहासाश्च निम्नगाः ।
वनोपान्तनदीशैलनिर्झरोपान्तभूमिषु ॥८॥

रमन्ते देवताः नित्यं पुरेषूद्यानवत्सु च ।
पर्वतेषु प्रशस्तेषु तीरेषु च पयोनिधेः ॥९॥

आश्रमेषु मुनीनां च ब्राह्मणाः यत्र नित्यशः ।
तत्र हर्यादयो देवाः वस्तुमिच्छन्ति सर्वदा ॥१०॥

यत्र भूमिः प्रशस्ता स्यात् भूसुराणां मनोहरा ।
सा भवेद्देवतानां च प्रिया कलशसंभव ॥११॥

[ देवालयकल्पनक्रमे द्वारादितत्तद्भागानां प्रमाणादिः ]

चतुष्षष्टिपदं कार्यं देवतायतनं सदा ।
द्वारं च मध्यमं तत्र समदिक्स्थं प्रशस्यते ॥१२॥

यो विस्तारो भवेद्यस्य द्विगुणा तत्समुन्नतिः ।
उच्छ्रायाद्यस्तृतीयोंऽशस्तेन तुल्या कटिर्भवेत् ॥१३॥

विस्तारार्धं भवेद्गर्भो भित्तयोऽन्यास्समन्ततः ।
गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम् ॥१४॥

उच्छ्रायात्पादविस्तीर्णा शाखा तद्वदुदुम्बरः ।
विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम् ॥१५॥

त्रिपञ्चसप्तनवभिः शाखाभिस्तत्प्रशस्यते ।
अधश्शाखाचतुर्भागे प्रतिहारौ निवेशयेत् ॥१६॥

---

९. b: पुरुषो for पुरेषू
१०. c: A. तत्र for तत्र;
११. श्लोकानन्तरं M. कोशे 'प्रमाणम्' इत्यधिकः ।
१३. b: A. द्विगुणं for द्विगुणा;
c: A. उच्छ्रायाद्यस्तु तुर्योंऽशः,
१६. d: T. प्रवेशयेत् for निवेशयेत्;

शेषं मङ्गल्यविहगैः श्रीवृक्षस्वस्तिकैर्घटैः ।
मिथुनैः पत्रवल्लीभिः प्रतिमाभिश्च शोभयेत् ।।१७।।

द्वारमानाष्टभागोना प्रतिमा स्यात् सपिण्डिका ।
द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पण्डिका ।।१८।।

[ विंशतिसंख्याकानाम् आलयानां परिगणनम् ]

मेरुमन्दरकैलासविमानच्छन्दनन्दनाः ।
समुद्रपद्मगरुडनदीवर्धनकुञ्जराः ।।१९।।

गुहराजो वृषो सिंहस्सर्वतोभद्रको घटः ।
हंसो वृत्तश्चतुष्कोणः षोडशाष्टाश्रकस्तथा ।।२०।।
इत्येते विंशतिः प्रोक्ताः प्रासादाः शार्ङ्गधन्वनः ।

[ देवालयस्य सामान्यं लक्षणम् ]

यथोक्तेन क्रमेणैव तेषां लक्षणमुच्यते ।।२१।।

पूर्वोक्तायामविस्तारावर्धीकृत्य यथावसु ।
चतुर्भागेन वा कुर्यात् सर्वं वित्तानुसारतः ।।२२।।

[ आलयकल्पनक्रमे अर्धमण्डपाद्यायामादिः ]

गर्भगेहसमायामम् अर्धमण्टपमुच्यते ।
सपादं सार्धयुक्तं वा त्रिपादाधिकसंयुता ।।२३।।

अर्धमण्डपमानेन सार्धं नृत्तार्धमण्डपम् ।
वैपुल्यसदृशं सार्धं द्विगुणं वा यथेच्छया ।।२४।।

तयोर्मण्डपयोरेवमायामो मुनिपुङ्गव ।
अन्तर्मण्डलनामानं प्राकारं प्रथमं विदुः ।।२५।।

---

१७. b: A. वटैः for घटैः;
c: T. पञ्च for पत्र;
१८. श्लोकानन्तरं M. कोशे 'विमानानि' इत्यधिकः ।
१८. a: A. ऊनं for ऊना;
२२. d: T. वृत्त for वित्त; श्लोकादनन्तरं M. कोशे 'अर्धमण्डपादि' इत्यधिकः ।
२३. c: A. M. वार्धयुक्तं for सार्धयुक्तं;
२४. b: M. नृत्तार्थं for नृत्तार्धं;
२५. c: T. अन्तमण्डल मानानाम्; A. तन्मानम् for नामानं;

विमानं वेष्टयेदेतत् यद्वा स्यादर्धमण्डपम् ।
अन्तर्हाराह्वयं वप्रं कारयेत्तदनन्तरम् ।।२६।।
मर्यादाख्यं तृतीयं तत्प्राकारं विधिभाषितम् ।

[ मूलबिम्बादिस्थापनस्थाननिर्देशः ]

मूलबिम्बं प्रतिष्ठाप्यं गर्भगेहे विधेः पदे ।।२७।।
यद्वा दैवे मानुषे वा ध्रुवस्थापनमाचरेत् ।

[ द्वारपालस्थाननिर्देशः ]

चण्डप्रचण्डौ संस्थाप्य गर्भद्वारे यथाक्रमम् ।।२८।।

अर्धमण्डपकद्वारे शङ्खचक्रोत्तमाङ्गिनौ ।
अन्तर्मण्डलसंज्ञस्य स्थलस्य द्वारपार्श्वयोः ।।२९।।

जयश्च विजयश्चोभौ कर्तव्यौ मुनिपुङ्गव ।
अन्तर्हाराह्वये धाम्नि द्वारि पद्मगदाधरौ ।।३०।।
दुर्जयप्रबलौ स्थाप्यौ मर्यादाद्वारपार्श्वयोः ।

[ परिवारदेवस्थाननिर्देशः ]

एकावरणके धाम्नि परिवारान्निमान् शृणु ।।३१।।

नृत्तार्धमण्डपस्याग्रे कल्पनीयो विहङ्गराट् ।
गोपुरस्योत्तरे साले मन्दिराभिमुखे रविः ।।३२।।

तस्यैव दक्षिणे साले चन्द्रमाः परिकल्प्यते ।
वह्नौ कामो यमे ब्रह्मा नैरृते स्याद्गजाननः ।।३३।।

वारुणे षण्मुखो दुर्गा वायौ सौम्ये धनाधिपः ।
ईशाने शंकरं तत्र क्षेत्रपालं प्रकल्पयेत् ।।३४।।

सोमेशयोरन्तराले विष्वक्सेनं प्रकल्पयेत् ।
अङ्गणे दक्षिणे सप्तमातरः श्रीस्तु नैरृते ।।३५।।

---

२६. c: A. अन्तर्धार for अन्तर्हार; T. भार for हार;
३२. d: M. मुखो for मुखे;
३४. c: A. शंकरः for शंकरम्;

इन्द्रादयो लोकपालाः पूज्याः स्वाशासु चाङ्गणे ।
गोपुरस्य भवेदन्तर्बहिर्वा बलिपीठिका ।।३६।।

अन्तर्हाराह्वयोपेते विशेषो धाम्नि कथ्यते ।
सूर्याचन्द्रमसोः स्थाने विशेषौ पुरुषाच्युतौ ।।३७।।

सूर्याचन्द्रमसौ कल्प्यौ द्वितीयावरणे तथा ।
हयग्रीवः स्मरस्थाने स्थाप्यः सङ्कर्षणो विधेः ।।३८।।

वराहो विघ्नराट् स्थाने प्रद्युम्नः षण्मुखस्य च ।
कात्यायिन्याः अनन्तः स्यात् अनिरुद्धो नरासने ।।३९।।

नृकेसरी शंकरस्य चाङ्गणे पीठिकासु चेत् ।
इन्द्रादयः समभ्यर्च्याः तेषां स्थाने यथाक्रमम् ।।४०।।

चक्री च मुसली शंखी खड्गी चैव गदाधरः ।
शार्ङ्गी पद्मी तथा वज्री पूज्या दिव्यास्त्रधारिणः ।।४१।।
प्रथमावरणे येषां स्थाना ये समुदीरिताः ।

[ आलये द्वितीयावरणस्थपरिवारदेवानां स्थानानि ]

ज्ञेयाः द्वितीये ते सर्वे परिवाराः यथाक्रमम् ।।४२।।

मर्यादावरणे धाम्नि गोपुरोभयपार्श्वयोः ।
शङ्खं चक्रं तथा स्थाप्य देवदेवायुधोत्तमौ ।।४३।।

उपेन्द्रं गोपुरशिरोभागे स्थाप्य ततः परम् ।
आग्नेयादिक्रमेणैव प्राकृतादीन् प्रकल्पयेत् ।।४४।।

---

३७. a: A. T. अन्तर्भार for अन्तर्हार;
b: A. M. स्थास्ति for धाम्नि;
३८. d: A. स्थाने for स्थाप्यः;
३९. b: A. शरजन्मनः for षण्मुखस्य च;
c: T. अनन्तश्च for अनन्तः स्यात्;
४०. a: A. शाङ्करे for शंकरस्य;
b: A. स्यात् for चा०;
४१. a: b: c: d:,
४२. a: b: c: d: T. om.;

उपेन्द्रः प्राकृतः पुण्यः पुष्करो विश्वभावनः ।
असुरघ्नः कृतान्तश्च भूतनाथोऽष्टमः स्मृतः ॥४५॥

अङ्गणे पीठिकास्थाने कुमुदादीन् प्रकल्पयेत् ।
कुमुदः कुमुदाक्षश्च पुण्डरीकश्च वामनः ॥४६॥

शङ्कुकर्णः सर्पनेत्रः सुमुखस्सुप्रतिष्ठितः ।
विष्वक्सेनं तदाग्नेय्यां क्षेत्रपालं खगेश्वरम् ॥४७॥

प्रधानवेद्यभिमुखं कल्पयेत्कुम्भसंभव ।
महापीठं च तत्रैव ध्वजयष्टिं च शार्ङ्गिणः ॥४८॥

[ आलये महानसादिस्थाननिर्देशः ]

प्रथमावरणे वापि द्वितीयावरणेऽपि वा ।
तृतीयावरणे वापि पाकस्थानं प्रकल्पयेत् ॥४९॥

वारुणे वाऽथवा सौम्ये कूपं शार्वेऽपि वा भवेत् ।
यत्र वाऽपां रसास्सन्ति तत्र कूपं प्रकल्पयेत् ॥५०॥

[ त्रिविधं वैष्णवविमानम् ]

नागरं द्राविडं चेति वेसरं च त्रिधा मतम् ।
विमानं देवदेवस्य विमलं वैष्णवं स्मृतम् ॥५१॥

॥ इति भार्गवतन्त्रे तृतीयोऽध्यायः ॥[1]

---

४७. a: M. सर्व for सर्प०;
४८. a: M. °करवम् for °मुखम्;
४९. श्लोकतः पूर्वं M. कोशे — 'महानसम्' इत्यधिकः ।
१. अध्यायः इत्यतः अनन्तरम् M. कोशे 'हरिः ओम्' इत्यधिकः ।

# चतुर्थोऽध्यायः

## [ प्रतिमाङ्गमानादिनिरूपणाध्यायः ]

[ प्रतिमानिर्माणविषये सामान्यजिज्ञासा ]

अगस्त्यः

कथं वा वासुदेवस्य निर्मेया प्रतिमा हरेः ।
कति भेदानि बिम्बानां ब्रूहि मे कृपया प्रभो ।।१।।

[ रेण्वादिमानविशेषाणां लक्षणम् ]

रामः

वातायनपथं प्राप्य ये भान्ति रविरश्मयः ।
तेषु सूक्ष्मा विसर्पन्ति रेणवः परमाणवः ।।२।।

परमाणुरजः केशलीक्षायूकयवाष्टकैः ।
लब्धं मानाङ्गुलं शालित्रिभिर्मानान्तराङ्गुलम् ।।३।।

आचार्यदक्षिणकरे मध्यमाङ्गुलमध्यमे ।
पर्वणोरन्तरं दीर्घं मात्राङ्गुलमुदाहृतम् ।।४।।

विनाङ्गुष्ठेन शेषाभिः मुष्टिमङ्गुलिभिः कृतम् ।
चतुर्धा विभजेदेको भागो मुष्टयङ्गुलिः स्मृता ।।५।।

यत्किञ्चित् प्रतिमामानं विभज्य दशधा पुनः ।
एकं द्वादशधा लब्धं देहलब्धाङ्गुलं भवेत् ।।६।।

[ उपादानद्रव्यभेदानुसारं सप्तविधानि बिम्बानि ]

रत्नजं शैलजं बिम्बं दारुजं लोहजं तथा ।
मृत्त्रैवस्तुकयोर्बिम्बं चित्रजं चेति सप्तधा ।।७।।

---

२. a: T. प्रथं for पथम;
c: A. तेषु सूक्ष्माणि सर्पन्ति;

३. b: A. लीक्षलूक for लीक्षायूक;

६. श्लोकात् पूर्वं M. कोशे 'बिम्बभेदः' इत्यधिकः;

[ बिम्बोत्सेधविषये उत्तमः पक्षः ]

बिम्बानि वासुदेवस्य कथ्यन्ते कलशोद्भव ।
तत्र प्रतिकृतेस्तावत्तदङ्गानां च कथ्यते ॥८॥

उत्सेधमानं मूर्धादिपादान्तमनुपूर्वशः ।
लब्धानां देहतस्तावत् अङ्गुलीनां शतेन च ॥९॥
चतुर्विंशति मानेन प्रतिमां परिकल्पयेत् ।

[ प्रतिमायाः तत्तदङ्गमाननिर्देशः ]

उष्णीषमङ्गुलमितं केशान्तं त्र्यङ्गुलं मतम् ॥१०॥

दृक्सूत्रान्तं तदारभ्य षट्त्रिंशत् यवसम्मितम् ।
तद्वन्नासापुटान्तं स्यात् तद्वच्च चिबुकावधि ॥११॥

तेन केशान्तमारभ्य मुखमानं मुनीश्वर ।
अष्टोत्तरयवशतं चिबुकावयवावधि ॥१२॥

गलमर्धाङ्गुलं सार्धं त्र्यङ्गुलं कण्ठमिष्यते ।
हिक्कासूत्रं समारभ्य हृदयान्तं मुखेरितम् ॥१३॥

ततः प्रभृति नाभ्यन्तं सार्धं सत्रिदशाङ्गुलम् ।
ततः प्रभृति मेढ्रान्तं तद्वदुत्सेधमिष्यते ॥१४॥

तन्मूलाज्जानुपर्यन्तं त्रिन्यूनं त्रिदशाङ्गुलम् ।
चतुरङ्गुलमुत्सेधं जानुमण्डलमिष्यते ॥१५॥

जानोरधस्तादक्षान्तमूरुमानमुदीरितम् ।
ततस्तालान्तमुत्सेधं चतुरङ्गुलसम्मितम् ॥१६॥

[ बिम्बोत्सेधविषये मध्यमपक्षः ]

देहलब्धानि यावन्ति दशतालेऽभिपूजिते ।
विभज्य तावदुक्तानि मध्यमे प्रतिमाविधौ ॥१७॥

---

९. a: A. मूर्त्यादि for मूर्धादि;
११. a: A. द्रक्षूतान्तं for दृक्सूत्रान्तं;
b: A. सहितम् for सम्मितम्;
१५. a: b: c: d: A. om;

त्रयोदशाङ्गुलं वक्त्रं त्रिस्थाने चतुरङ्गुलम् ।
षड्विंशत्यङ्गुलोत्सेधमूरुमानमुदाहृतम् ॥१८॥
तद्वज्जङ्घासमुत्सेधमुत्तरेणेतरत्समम् ।

[ बिम्बोत्सेधविषये अधमः पक्षः तत्तदङ्गविस्तारादिकं च ]

अधमे दशताले तु मुखं शतयवं मतम् ॥१९॥

त्रिस्थाने तावदेव स्यात् ऊरुर्यवशतद्वयम् ।
जङ्घा च तत्समोत्सेधा मुख्येनान्यत्समं स्मृतम् ॥२०॥

विंशद्यवशतं पादं द्राघिमा कमलापतेः ।
अङ्गुष्ठं वेदमानं स्यात् तदायामा च तर्जनी ॥२१॥

एकत्रिंशद्यवायामा मध्यमाङ्गुलिरिष्यते ।
त्रिंशद्यवानामिका स्यात्कनिष्ठा त्र्यङ्गुलात्मिका ॥२२॥

यवैश्च पञ्चभिर्युक्ता पार्ष्णी च चतुरङ्गुला ।
हिक्कान्तयोरधो बाहुरङ्गुलिस्सप्तविंशतिः ॥२३॥

ततश्च मणिबन्धान्तं षड्विंशत्यङ्गुलायतम् ।
यवद्वयेन च युतं मणिबन्धात्तलं पुनः ॥२४॥

मध्यमाङ्गुलिपर्यन्तम् अङ्गुलं सप्त कथ्यते ।
पञ्चाङ्गुलमथाङ्गुष्ठं तर्जनी तद्वदायता ॥२५॥

षड्यवैश्चाधिकायामा मध्यमा तु षडङ्गुला ।
आयता षड्यवैश्चापि तर्जन्यानामिका समा ॥२६॥

कनिष्ठाङ्गुष्ठतुलिता मांसलग्नं नखं स्मृतम् ।
एकाङ्गुला नखायामा शिष्टा षड्यवसम्मिता ॥२७॥

---

१८. b: A. M. त्रिस्थानं for त्रिस्थाने;
२०. a: A. M. त्रिस्थानं for त्रिस्थाने;
२१. b: A. द्रढिमा for द्राघिमा;
२२. d: A. त्र्यङ्गुलोऽपि च, M. त्रियङ्गुलापि च for त्र्यङ्गुलात्मिका,
२३. c: M. हिक्कान्ततः for हिक्कान्तयोः
२७. d: A. वर्जिता for सम्मिता,

बाहुवच्चोपबाहुः स्याच्चतुरङ्गुलमायतम् ।
चतुर्यवं चोर्ध्वकण्ठं नालं पञ्चाङ्गुलायतम् ॥२८॥

लिङ्गं पञ्चाङ्गुलायामं मुष्कं तु चतुरङ्गुलम् ।
सार्धाष्टाङ्गुलविस्तारं ललाटं तदनन्तरम् ॥२९॥

द्वादशाङ्गुलविस्तारं बालचन्द्रसमाकृतिः ।
ततस्तु कर्णयोर्मध्यं सार्धं सत्रिदशाङ्गुलम् ॥३०॥

दशाङ्गुलमधस्तस्य विस्तारं चिबुकस्य तु ।
सपादं द्व्यङ्गुलं पूर्णं चापतुल्याकृतिर्भवेत् ॥३१॥

मूलमध्याग्रविस्तारो ग्रीवायाः क्रमशो भवेत् ।
नवाङ्गुलं तथैकोनं सार्धसप्ताङ्गुलं तथा ॥३२॥

हिक्कान्ततोरधो बाहुर्मूलयोरन्तरं भवेत् ।
यवैश्चतुर्भिर्विस्तीर्णं स चत्वारिंशदङ्गुलम् ॥३३॥

कक्षयोर्मध्यविस्तारस्त्र्यङ्गुलः सार्धविंशतिः ।
अष्टादशाङ्गुलं मानं स्तनयोरपि चान्तरम् ॥३४॥

षोडशाङ्गुलविस्तारं तुन्दमध्यमुदाहृतम् ।
अष्टादशाङ्गुला श्रोणिरधरोदरमिष्यते ॥३५॥

कटिप्रदेशविस्तारस्त्र्यङ्गुलः सार्धविंशतिः ।
ऊरुमूलस्य विस्तारस्सार्धं सत्रिदशाङ्गुलम् ॥३६॥

अग्रमेकाङ्गुलं सार्धं द्व्यङ्गुलं मध्यमिष्यते ।
द्व्यङ्गुलो मूलविस्तारो लिङ्गस्य समुदाहृतम् ॥३७॥

विस्तीर्णं त्र्यङ्गुलं मूलं मध्यमर्धाधिकं पुनः ।
विस्तीर्णमग्रमुष्कस्य द्वात्रिंशद्यवसम्मितम् ॥३८॥

विस्तीर्णमेकादशभिरङ्गुलैरूरुमध्यमम् ।
अग्रं दशभिरेव स्यात् विस्तीर्णं कलशोद्भव ॥३९॥

नवाङ्गुलं जानुचक्रं सार्धमर्धेन्दुसन्निभम् ।
मूलं नवाष्टौ मध्ये स्याज्जङ्घाग्रं सार्धसप्तकम् ॥४०॥

---

३५. b: A. भुज for तुन्द,

विस्तीर्णो नालिकाभागः सार्धश्च चतुरङ्गुलैः ।
अङ्घ्रिमूलस्य विस्तारस्त्र्यङ्गुलस्सचतुर्यवः ॥४१॥

सार्धपञ्चाङ्गुलं मध्यमग्रं सार्धषडङ्गुलम् ।
सार्धमष्टाङ्गुलं मूलं बाहू सप्ताङ्गुलौ पुनः ॥४२॥

मध्येऽग्रे तुल्यविस्तारे प्रकोष्ठावयवं पुनः ।
सार्धेन सप्तभिर्मूले विस्तीर्णं सार्धपञ्चभिः ॥४३॥

मध्ये चतुर्भिरग्रे स्यान्मणिबन्धस्य तूच्यते ।
पञ्चाङ्गुलार्धसहितस्तद्वत् करतलं स्मृतम् ॥४४॥

अङ्गुष्ठे मूलविस्तारो द्व्यङ्गुलो मध्यमाङ्गुलम् ।
सषडयवममुष्याग्रमङ्गुलेनैव सम्मतम् ॥४५॥

तर्जन्या मूलविस्तारो नवभिः सम्मितो यवैः ।
मध्यमेकाङ्गुलं सप्त यवमग्रमुदाहृतम् ॥४६॥

मूलं दशयवं मध्यं मध्यमायाः यवा नव ।
अग्रमेकाङ्गुलं प्रोक्तमितरा तर्जनी समा ॥४७॥

मूलमष्टौ कनिष्ठायाः यवाः सप्तैव मध्यमे ।
षडयवोऽग्रेऽङ्गुलाग्रेभ्यः पादोना नखविस्तृतिः ॥४८॥

मध्ये करतले रेखा मध्यमामूलमास्थिता ।
कनिष्ठामूलमारभ्य रेखा मध्यमगा भवेत् ॥४९॥

मध्यमाङ्गुलितर्जन्योर्निमातव्या विचक्षणैः ।
अङ्गुष्ठमूलमारभ्य तर्जन्यन्तश्च मध्यमा ॥५०॥

तयोश्च रेखयोर्मध्ये तर्जनी मूलगामिनी ।
रेखा कल्प्या यथाशास्त्रं शास्त्राभिज्ञेन शिल्पिना ॥५१॥

ललाटस्य च विस्तारस्सपादस्त्र्यङ्गुलो भवेत् ।
तस्याधस्ताद् भ्रुवौ कल्प्यौ चत्वारिंशद्यवायतौ ॥५२॥

---

४१. a: M. नलका for नालिका;

४३. a: A. मध्येश्चे for मध्येऽग्रे;

४७. b: T. M. मध्यमायाथवा नव;

५२. d: M. यवायतम् for यवायतौ;

मध्ये यवेन विस्तीर्णे यूकाग्रे चापसन्निभे ।
तयोर्मध्यं नव यवम् अष्टादशयवायतम् ।।५३।।

चक्षुःकनीनिकायाम्रो विस्तारश्च यवः स्मृतः ।
अङ्गुलं श्वेतबिम्बस्य विस्तारं कृष्णमण्डलम् ।।५४।।

यवोनमङ्गुलं ज्योतिस्तन्मध्ये यवसम्मितम् ।
यूकमानं तु तन्मध्ये दृष्टिः पक्ष्मावली पुनः ।।५५।।

अशीति पक्ष्मरोमाणि वक्त्राग्राण्यसितानि च ।
द्व्यङ्गुलं चक्षुषोर्मध्यं मध्यं च श्रुत्यपाङ्गयोः ।।५६।।

चत्वारिंशद्यवं कर्णविस्तारो द्व्यङ्गुलो भवेत् ।
ऊर्ध्वकर्णस्य चायामस्सहार्धचतुरङ्गुलः ।।५७।।

नालं पञ्चाङ्गुलमितं विस्तारः षड्यवं पुनः ।
पश्चाच्चतुर्यवा पाली नालतुल्यं प्रकल्पयेत् ।।५८।।

श्रवणस्य च पिप्पल्या मध्यगर्तं चतुर्यवम् ।
त्रिवक्रकर्णपिप्पल्या गल्लपात्रमिव स्थितम् ।।५९।।

बन्धनं त्र्यङ्गुलं रन्ध्रं नेत्रसूत्रसमुन्नतम् ।
नासिकामूलमध्याग्रविस्तारः कथ्यते क्रमात् ।।६०।।

अङ्गुलं चाङ्गुलं सार्धं द्व्यङ्गुलं सचतुर्यवम् ।
अङ्गुलेनोन्नतं मूलं तेन सार्धेन मध्यमम् ।।६१।।

द्वाभ्यां यवाभ्यां मूलेन द्व्यङ्गुलेनाग्रमुत्तमम् ।
षड्यवं सुषिरं तस्य पुटमध्यं चतुर्यवम् ।।६२।।

---

५३. a: b: c: d: om. M.

५६. a: T. पक्ष for पक्ष्म;
b: A. वक्त्रा ग्राह्याण्यसितानि च;
c: A. द्व्यङ्गुले for द्व्यङ्गुलम्;

५८. c: A. लाली for पाली;

५९. a: A. om च; b: c: A. om; d: A. गल० for गल्ल०;

६१. c: T. अङ्गुष्ठेन for अङ्गुलेन;

६२. b: T. M. उन्नतम् for उत्तमम्;

# त्रयोविंशोऽध्यायः

## [ सम्प्रोक्षणनिरूपणाध्यायः ]

### [ सर्वत्र प्रायश्चित्तेषु सामान्यकृत्यानि ]

श्रीरामः

प्रायश्चित्तानि सर्वाणि कथितानि महामुने।
तेषु सर्वेषु कुर्वीत साङ्कुरं कौतुकं पुरा॥१॥

अधिवासश्च कर्तव्यः प्रतिष्ठायां यथेरितः।
अपरेद्युर्भवेत् प्रातः कलशस्थापनक्रमः॥२॥

ब्राह्मवैष्णवपुण्यानां विनान्यत्रापराजितम्।
प्रायश्चित्ते द्रव्यकुंभस्थापने सोदकं भवेत्॥३॥

मध्ये न्यसेद्द्रव्यकुंभं परितः शुद्धवारि च।
मौक्तिकं रजतं वापि तेषु न्यस्याम्बुपूरणम्॥४॥

आवाह्य देवमभ्यर्च्य प्रतिष्ठाप्य हुताशनम्।
हुत्वा यथाविधि गुरुः पूर्णाहुत्यवसानिकम्॥५॥

स्नापयित्वाथ जप्त्वा च भोजयित्वा द्विजोत्तमान्।
गुरुमभ्यर्च्य नत्वा च दत्त्वा तस्मै च दक्षिणाम्॥६॥

ऋत्विग्भ्यः सहकारिभ्यो ब्राह्मणेभ्यश्च दक्षिणाम्।
वितीर्य देवं निनयेत् मन्दिरान्तर्भुवं गुरुः॥७॥

[ सम्प्रोक्षणावसरः ]

शृणु वक्ष्येऽधुना ब्रह्मन् संप्रोक्षणविधिं क्रमात्।
अङ्गभङ्गादिसन्धाने धाम्नो वा कौतुकस्य वा॥८॥

चिराय पूजालोपे वा भूगुप्ते मरणेऽपि या।
जनने मैथुने धाम्नि शिल्पिस्पृष्टेऽपि कौतुके॥९॥

---

२. b: A. यथेरितम् for यथेरितः;

एवमादिषु चान्येषु सम्प्रोक्षणमुदाहृतम् ।

[ सम्प्रोक्षणसन्नाहः ]

पुण्याहं वाचयेत्पूर्वं 'विष्णोर्नुकमि'ति ब्रुवन् ॥१०॥

प्रोक्षयेद्धामबिम्बादीन् अब्लिङ्गैः क्षालयेदपि ।
अङ्कुराण्यर्पयेत्पश्चात् बध्वा प्रतिसरं ततः ॥११॥

कर्माङ्गस्नपनं कुर्यात् वैष्णवेनैव वर्त्मना ।
शाययेच्छयने देवं प्रतिष्ठायामिवात्मवान् ॥१२॥

द्वारतोरणकुंभादीन् यथापूर्वं समर्चयेत् ।
वेदिकायां धान्यपीठे महाकुंभं निवेशयेत् ॥१३॥

सूत्रवेष्टितसर्वाङ्गं सरत्नं प्रतिमान्वितम् ।
कूर्चापिधानपत्राढ्यं वस्त्रयुग्मसमन्वितम् ॥१४॥

तस्यैव दक्षिणे पार्श्वे तादृशं करकं न्यसेत् ।
वासुदेवं महाकुंभे करके च सुदर्शनम् ॥१५॥

आवाह्याथ यथान्यायं नैवेद्यान्तं समर्चयेत् ।

[ सम्प्रोक्षणाङ्गहोमविधिः प्रोक्षणप्रकारश्च ]

अग्निं संसाध्य विधिवत् तत्रावाह्य जगत्प्रभुम् ॥१६॥

समिद्भिराज्यैश्चरुभिस्तिलैश्चापि पृथक् पृथक् ।
अष्टोत्तरशतं हुत्वा शान्तिहोमं यथापुरम् ॥१७॥

पूर्णाहुतिं ततो हुत्वा समुद्वास्यानलस्थितम् ।
अन्यांश्च देवानुद्वास्य देवमन्तर्निवेशयेत् ॥१८॥

महाकुंभजलेनैव प्रोक्षयेत्पुरुषोत्तमम् ।
कूर्चेन पञ्चोपनिषदैरब्लिङ्गैरितरैरपि ॥१९॥

---

१३. d: A. होम for महा;

१४. c: T. विधान for पिधान;
d: T: समञ्चितम् for समन्वितम्;

१६. a: M. धान्यायं for यथान्यायम्;
b: M. समाचरेत् for समर्चयेत्;

शान्तिमन्त्राणि समये पठेयुर्ब्राह्मणोत्तमाः ।
एवं सम्प्रोक्ष्य देवेशं यथापूर्वं समर्चयेत् ॥२०॥

[ ब्राह्मणादिसम्माननं दक्षिणाप्रदानं च ]

ब्राह्मणान् भोजयेद्भक्त्या देया ताम्बूलदक्षिणा ।
आचार्यदक्षिणां दद्यात् शतनिष्कं ततोऽधिकम् ॥२१॥

॥ इति भार्गवतन्त्रे त्रयोविंशोऽध्यायः ॥

———

# चतुर्विंशोऽध्यायः

## [ अष्टाक्षरमन्त्रनिरूपणाध्यायः ]

### [ रामस्य माहात्म्यकीर्तनं कार्तज्ञ्यज्ञापनञ्च ]

अगस्त्यः

भगवन् सर्वलोकेश सर्वर्षिगणसेवित ।
त्वमेव भगवान् विष्णुस्त्वं ब्रह्मा त्वं महेश्वरः ॥१॥

त्वमादित्यस्त्वमग्निश्च चन्द्रमास्त्वं पुरन्दरः ।
वायुस्त्वं सर्वभूतात्मा नागराजोऽसि वासुकिः ॥२॥

अनन्तः फणिनामिन्द्रः स्रष्टा त्वं सर्वदेहिनाम् ।
अन्तश्चरसि भूतानामादिमध्यान्तवर्जितः ॥३॥

पुरुषस्त्वं परं ब्रह्म जगद्बीजं सनातनम् ।
त्वां विना नैव पश्यामि परात्परतरं प्रभुम् ॥४॥

कल्पान्ते सागरे क्षुब्धे संहृत्य निखिलं जगत् ।
कुक्षौ वहसि देवेश शेषत्वं शेषमण्डले ॥५॥

त्वं यासि पक्षिराजेन श्रियं वहसि वक्षसि ।
शेषं सर्वं जगदिदं शेषी त्वं परमेश्वर ॥६॥

त्वयाद्यानुगृहीतोऽस्मि कटाक्षाभ्यां विलोकितः ।
पूतोऽस्मि पुरुषेशान पुण्यलोकेऽस्मि कश्चन ॥७॥

कृत्स्नस्य पञ्चरात्रस्य सारमग्राहिषं प्रभो ।

### [ अष्टाक्षरमन्त्राधिकारित्वविषये जिज्ञासा ]

कृपया ते दयासिन्धो शुश्रूषा काचिदस्ति मे ॥८॥

---

२. d: A. अपि for असि;

५. d: T. शेषे त्वं for शेषत्वं ;

तदप्यद्योपदेष्टव्यं रहस्यमपि दुर्लभम् ।
अष्टाक्षराख्यमन्त्रस्य अधिकारी च तज्जपे ॥९॥

[ अष्टाक्षरमन्त्राधिकारिलक्षणम् ]

श्रीरामः

सम्यक् पृष्टं मुनिश्रेष्ठ सर्वस्वं सङ्ग्रहेण ते ।
उपदेक्ष्यामि तन्मन्त्रमधिकारी प्रपञ्च्यते ॥१०॥

आत्मानं मन्यते शेषं शेषिणं परमेश्वरम् ।
अनुकम्पास्य भूतेषु तैरप्येषोऽनुकम्प्यते ॥११॥

निरीहः सर्वकार्येषु सोऽहमस्मिञ्जगत्त्रयम् ।
मृत्युमप्यात्मनो मित्रं मन्यतेऽस्माद्बिभेति सः ॥१२॥

क्षुधितो वा न तृषितः चिन्तयानः सदा हरिम् ।
वर्षं वातं च भानुं च सहजं मन्यते समम् ॥१३॥

कृच्छ्रेष्वप्यतिसंतुष्टो विनीतः क्षेमवृद्धिषु ।
वनितासु भवेत् षण्डः जन्मान्धो दोषदर्शने ॥१४॥

परदोषप्रवचने मूको निन्दाप्रशंसने ।
बधिरो वेदविद्गोष्ठ्याम् आनन्दाश्रुपरिप्लुतः ॥१५॥

किङ्करो हरिभक्तानां हरिसेवैकमानसः ।
अधिकारी भवेदेषः ग्रहीतुं मनुमीदृशम् ॥१६॥

[ शुद्धमिश्रयोः सामान्यभेदः ]

शुद्धो मिश्र इति द्वैधीं भजेत स मुनीश्वरः ।
आद्यमेकायनं वेदं ब्रह्मैकप्रतिपादकम् ॥१७॥

तेनैव संस्कृतः शुद्धः मिश्रस्त्रैय्या प्रकीर्तितः ।
अष्टाक्षरस्त्रैविद्यानां शुद्धानां द्वादशाक्षरी ॥१८॥

---

१०. d: M. प्रपञ्चते for प्रपञ्च्यते;

११. d: M. °कम्पते for °कम्प्यते;

१७. c: T. अधिकारे for अधिकारी;

१८. b: A. भजते for भजेत;

१९. b: A. त्रैधा for त्रैय्या;

[ शुद्धवैष्णवानां लक्षणमाचारश्च ]

बलादिमन्त्रैरच्छिद्रं पञ्चकालप्रवर्तनम् ।
एकाध्वना निषेकादिसंस्कारश्च बलादिभिः ॥१९॥

द्वादशाक्षरविद्यैव तेषां विद्या न च त्रयी ।
न सावित्री न मन्त्रोऽन्यः स्वाध्यायजपकर्मणोः ॥२०॥

मूलेषु निस्पृहाः सर्वे 'द्वादशाक्षर'चिन्तकाः ।
शावसूतकहीनास्ते केवलं मोक्षकामिनः ॥२१॥

कर्षणादिक्रियास्वेते कल्प्यन्ते नाधिकारिणः ।
अज्ञानाद्यदि ताः कुर्युश्च्यवन्ते नात्र शंसयः ॥२२॥

मन्त्रसिद्धान्तनिष्ठेन दीक्षितेन प्रतिष्ठितम् ।
पूजार्थमात्मनो बिम्बं प्रतिगृह्य समर्चयेत् ॥२३॥

बीजशक्त्यङ्गरहितं 'द्वादशाक्षर'विद्यया ।
कृत्वा प्रतिष्ठां तद्बिम्बं दापयन्मूलशाखिने ॥२४॥

न दीक्षा नैव देहस्य दहनादिविशोधनम् ।
नाङ्गन्यासादिसकलं नेष्टमेकायनेऽध्वनि ॥२५॥

एकायनप्रविष्टानां त्रैविद्यानामपीदृशः ।
बीजशक्त्यङ्गरहितम् ऋषिच्छन्दो विवर्जितम् ॥२६॥

स्वरूपमेव मन्त्रस्य जपः स्वाध्यायकर्मणोः ।

[ दीक्षया योग्यतोत्पादनं मुख्या दीक्षा च ]

दीक्षया जायते योग्यः त्रैविद्यः देवपूजने ॥२७॥

चक्राब्जमण्डले दीक्षा तस्य मुख्या प्रकीर्तिता ।
अनुकल्पा भवेद्दीक्षा केवलं वह्निसन्निधौ ॥२८॥

दीक्षितो देवदेवस्य कर्षणादिक्रियां चरेत् ।
नाधिकारी भवेद्यस्तु दीक्षाविरहितो द्विजः ॥२९॥

---

२६. c: A. °न्यासानि for °न्यासादि;
२७. a: A. एकायनम् for एकायन;

तस्माद्धर्यर्चनाकाङ्क्षी दीक्षेत हरिसन्निधौ ।
कुंभे च मण्डले चाग्नौ हरिमावाह्य पूजयेत् ।।३१।।

मायासूत्रं च निर्भिद्य पूतो भवति मानवः ।
नेत्रबन्धाद्विनिर्मुक्तो दृष्ट्वा चक्राब्जमण्डलम् ।।३२।।

विकीर्णस्वर्णकुसुमो लब्धपुण्ड्राह्वयो गुरोः ।
अधीत्य सकलान् मन्त्रान् अष्टाक्षरपुरस्सरान् ।।३३।।

विद्यां हर्यर्चनमयीम् अभिषिक्तो घटोदकैः ।
अर्हत्यर्चयितुं विष्णुं प्रतिष्ठातुं यथाविधि ।।३४।।

महोत्सवादिकं कर्तुं नित्यनैमित्तिकादिकम् ।
एषा मुख्या भवेद्दीक्षा जघन्या वक्ष्यते शृणु ।।३५।।

[ जघन्यायाः दीक्षायाः स्वरूपम् ]

स्थण्डिलं प्रतिमां विष्णोः कुंभमर्चिश्च पूजयेत् ।
अथवा तु यथालाभं केवलं वा हुताशनम् ।।३६।।

जुहुयाद्धेतिराजेन बाहुमूले समङ्कितः ।
पाञ्चजन्येन वा साकं ततो नामादिपूर्ववत् ।।३७।।

लब्ध्वा गुरोर्यथाशास्त्रं भूयादेषोऽर्चनाविधौ ।
नित्ये नैमित्तिके काम्ये कर्षणादिषु कर्मसु ।।३८।।

एषा दीक्षा द्वितीया स्यात् पञ्चसंस्कारलक्षणा ।
इमेऽधिकारिणः प्रोक्ताः वासुदेवार्चनाविधौ ।।३९।।

एते ह्यष्टाक्षरान् जप्तुम् इतरान् अपि वा मनून् ।
नान्येऽधिकारिणस्तेषां कीर्तने स्मरणेऽपि वा ।।४०।।

---

३३. a: T. विकीर्णम्, for विकीर्ण;
b: M. पुण्ड्रांश्च यो for पुण्ड्राह्वयो;

३५. c: M. एष for एषा;

३६. b: M. अग्नि for अर्चिः;
c. A. °त्र for तु;
c: T. लोभम् for लाभम्;

३७. c: A. व्यातं for साकम्;

३८. b: A. मन्त्रदोष for भूयादेषो;

[ अष्टाक्षरमन्त्रोद्धारप्रकारः ]

अष्टाक्षरमनुं वक्ष्ये सावधानमनाः शृणु ।
आदौ तु छन्दसामादिर्विघ्नेशस्तदनन्तरम् ॥४१॥

ओतदेहेन जीवात्मा तृतीयो वर्ण ईरितः ।
विष्णुना सह विघ्नेशः चतुर्थः कलशोद्भव ॥४२॥

विष्णुं विभ्रन् महाज्वालः पञ्चमो मारुतस्ततः ।
स विष्णुः सुमुखः षष्ठादनन्तर उदीरितः ॥४३॥

अवसाने मरुद्भाति प्राणो भूतभृतां सदा ।
एष तेऽष्टक्षरो मन्त्रो यथावदुदितो मया ॥४४॥

[ अष्टाक्षरमन्त्रस्य ऋष्यादिनिर्देशः ]

ऋषिर्नारायणो देवो देवता चास्य कीर्तितौ ।
छन्दस्तु देवी गायत्री बीजं विष्णुः सबिन्दुकः ॥४५॥

त्रिभिः पदैश्च भूयोऽपि षडङ्गानि महामुने ।
समस्ते कथितो भावः व्यस्ते वक्ष्यामि तच्छृणु ॥४६॥

भरद्वाजः कौशिकश्च जमदग्निरुदीरितः ।
वसिष्ठः कस्यपश्चात्रिरगस्त्यः ऋषयः क्रमात् ॥४७॥

द्वितीयाद्यास्तारकस्य परमेष्ठी ऋषिर्भवेत् ।
छन्दांसि प्रणवादीनां गायत्र्यादीनि चाञ्चले ॥४८॥

विराट् च देवता वच्मि क्रमादेषां धरो ध्रुवः ।
सोम आपस्तथाऽग्निश्च षष्ठो वरुण ईरितः ॥४९॥

प्रत्यूहश्च प्रभातश्च देवा अष्टौ यथाक्रमम् ।
नाभ्यादिहृदयान्तेषु न्यसनीयाश्च भूमिषु ॥५०॥

---

४३. a: M. नहाज्वाल for महाज्वालः;
४४. a: T. सदा for मरुत्;
b: A. भृता for भृताम्; M. मरुत् for सदा;
४६. a: T. M. पञ्चै for पदैः;

[ अष्टाक्षरमन्त्रजपात् पूर्वं ध्येयं भगवत्स्वरूपम् ]

चतुर्भुजमुदाराङ्गं शंखचक्रधरं विभुम् ।
कालमेघप्रतीकाशं पद्मपत्रनिभेक्षणम् ।।५१।।

किरीटहारकेयूरकाञ्चीकटकमण्डितम् ।
श्रीवत्सकौस्तुभोरस्कं कुण्डलाङ्गुलिभूषणम् ।।५२।।

पीताम्बरेण संवीतं यज्ञसूत्रोपशोभितम् ।
ललाटे चोर्ध्वतिलकं श्वेतया मृदुमृत्स्नया ।।५३।।

श्रिया भूम्या च सततं वालव्यजनवीजितम् ।
प्रफुल्लवारिजमुख मेघगम्भीरनिःस्वनम् ।।५४।।

एवं ध्यात्वा जपेन्मन्त्रं चतुर्वर्गफलप्रदम् ।

[ अष्टाक्षमन्त्रोपयोगः तस्य फलश्रुतिश्च ]

अनेन सकलाः देवाः साध्याः सन्ति न संशयः ।।५५।।

कुर्यादनेन मन्त्रेण प्राणायामं द्विजोत्तमः ।
सर्वपापविनिर्मुक्तो महायोगी भवेद्ध्रुवम् ।।५६।।

अङ्गानिवेदाश्चत्वारः शास्त्राणि विविधान्यपि ।
सर्वमष्टाक्षरे मन्त्रे स्वयमेव प्रतिष्ठितम् ।।५७।।

एतज्जपन् सदा ध्यायन् सर्वपापात् प्रमुच्यते ।
किमन्यैर्बहुभिर्मन्त्रैः सर्वमेतेन सिध्यति ।।५८।।

।। इति भार्गवतन्त्रे चतुर्विंशोऽध्यायः ।।

---

५१. d: M. निमेषक्षम् for निभेक्षणम् ;

५६. b: A. M. प्राणायामान् for प्राणायामम्;

# पञ्चविंशोऽध्यायः

## [ पञ्चकालप्रक्रियानिरूपणाध्यायः ]

### [ वैष्णवानां कृते पञ्चकालपरत्वनिर्देशः ]

श्रीरामः

त्रैविद्यो दीक्षितस्त्वेवं जपध्यानपरायणः ।
हरिन्यस्तमना भूत्वा पञ्चकालपरो भवेत् ॥१॥

### [ पञ्चकालविभागक्रमः ]

प्रातः कुर्यादधि(भि ?)गममुपादद्यात्ततः परम् ।
इज्यां कुर्वीत तदनु स्वाध्यायनिरतस्ततः ॥२॥

योगेन गमयेदन्ते एवं कालं नयेद्द्विजः ।

### [ अधिगमनादिविधीनां संक्षिप्तवर्णनम् ]

प्रातरुत्थाय शयनाद्धरेर्नामानि कीर्तयेत् ॥३॥

शोधयित्वा ततो देहं दन्तधावनपूर्वकम् ।
अवगाह्याप्सु नद्यादे'रघमर्षणमु'च्चरन् ॥४॥

वासोभ्यामथ संवीतश्चन्दनेन मृदापि वा ।
ऊर्ध्वपुण्ड्रं वहेत् फाले दद्यादर्घ्यं विवस्वते ॥५॥

सावित्र्या त्रिःपरिक्रम्य तर्पयित्वाथ देवताः ।
प्राणानायम्य सङ्कल्प्य जपेदासूर्यमण्डलम् ॥६॥

अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
उपस्थाय रविं दृष्ट्वा कर्मशेषं समाप्य च ॥७॥

अग्नौ च हुत्वा देवेशं प्रणम्यापीठमस्तकम् ।
आलोक्य त्रिःपरिक्रम्य पुत्रदारादिभिः सह ॥८॥

———————

१. a: M. त्वैवम् A. चैवम् for स्त्वेवम्;

२. a: A. अधिगरम् for अधिगमम्;

सम्भार्यानपि सम्भारान् सम्भार्याराधनात्मकान् ।
स्नात्वाराध्य जगन्नाथं यतीनप्यतिथीनपि ॥९॥

तोषयित्वाथ भुञ्जीत गुरुशेषं हविः स्वयम् ।
ततो ऋगादीन् शास्त्रान् वा पठेद्वा पाठयेदपि ॥१०॥

[ योगप्रक्रियानिर्देशः ]

स्नात्वा साध्यं समाप्याघ्यं जप्त्वाग्निं परिचर्य च ।
प्रणम्य देवदेवेशं पुण्डरीकाक्षविद्यया ॥११॥

स्तुत्वा भुक्त्वा च युञ्जीत स्वात्मानं ध्यानकर्मणि ।
प्राणायामपरो भूयात् 'मूलमन्त्रे'ण तत्त्ववित् ॥१२॥

नाडीमिडां पिङ्गलां च शोधयेच्च गतागतैः ।
तत्र तत्र च योगेन कारयेद्वायुधारणम् ॥१३॥

पृथिवीमप्सु तां वह्नौ तं वायावम्बरे च तम् ।
तं जीवे तं परे ब्रह्मण्यमले विनिवेशयेत् ॥१४॥

रात्रौ निशीथे विमले स्नात्वा तीर्थेऽन्वहं सुधीः ।
आसने सम्यगासीनः विविक्तेऽमलमानसः ॥१५॥

एवं ध्यायेत् परं ब्रह्म योगकर्मणि दीक्षितः ।
हृत्पुण्डरीकमध्यस्थं चैतन्यं ज्योतिरव्ययम् ॥१६॥

कदम्बमुकुलाकारं नित्यतृप्तं निरामयम् ।
अनन्तमानन्दमयं चिन्मयं भास्वरं विभुम् ॥१७॥

---

९. b: T. °नयनात्मवान्, M. °नघनात्मवान् for °राधनात्मकान्;
१०. b: A. गुरम् for गुरु°;
c: T. ऋगादि for ऋगादीन्;
d: T. पठेत् for पठेद्वा;
११. a: M. T. गृहीत्वा for समाप्य;
१४. a: T. तम् for ताम्;
c: T. तज्जीवे for तं जीवे;
१५. a: T. स्नात्वा for रात्रौ;
b: T. रात्रौ for स्नात्वा;
१७. d: T. भास्करम् for भास्वरम्;

निवातदीपसदृशमकृत्रिममणिप्रभम् ।
एवं ध्यायन्नयेत्कालं योगविद्याविशारदः ॥१८॥

[ निद्रास्वीकारप्रकारः ]

योगावसाने भूयोऽपि लयक्रमविपर्ययात् ।
जीवादिवसुमत्यन्तं सृष्ट्वा देवाय तर्पयेत् ॥१९॥

ततः शयीत खट्वायां सुवासिन्या विनापि वा ।
एवं दिनानि गमयन्नन्ते देवं हरिं व्रजेत् ॥२०॥

[ निद्रास्वीकाराभावे विकल्पः अष्टाक्षरमंत्रजपफलञ्च ]

अथवा'ष्टाक्षरं मन्त्रं' यथाशक्ति जपेच्छुचिः ।
मुमुक्षुर्लभते मुक्तिं भुक्तिकामोऽतुलां श्रियम् ॥२१॥

आरोग्यं पुत्रसंपत्तिं धरणीं सस्यमालिनीम् ।
राजश्रीवस्यमतुलं राज्यलक्ष्मीं च शाश्वतीम् ॥२२॥

आयुश्च ज्ञानमतुलं प्रावण्यं सर्वकर्मसु ।
यद्यदिच्छन्ति जप्तारः सर्वं करतले भवेत् ॥२३॥

[ अस्य शास्त्रस्य ग्रहणे अधिकारिणः ]

शास्त्रमेतन्मुनिश्रेष्ठ सर्वगुह्यं सनातनम् ।
विष्णुभक्ताय दातव्यं जगतामुपकारिणे ॥२४॥

पुण्यकृद्भ्यः प्रदातव्यं भीरुभ्यः पापकर्मणः ।
न नास्तिकाय दातव्यं नाभक्ताय कदाचन ॥२५॥

गोपनीयमिदं शास्त्रं यदेतद्ब्रह्मसम्पुटम् ।

[ अस्य शास्त्रस्याध्ययनफलश्रुतिः ]

एतद्यः पठते भक्त्या तस्मिन् देवः प्रसीदति ॥२६॥

---

२२. c: T. स्त्री for श्री;
d: A. राज for राज्य°
२३. b: A. प्रावर्ण्यम् for प्रावण्यम्;
२५. b: A. M. om;
c: d: M. om;

तस्य मुक्तिः करतले स पापेभ्यः प्रमुच्यते ।
सुतार्थी सुतमाप्नोति स्त्रीकामः सुदतीं द्रुतम् ॥२७॥

आयुष्कामो दीर्घमायुः रुग्णो रोगाद्विमुच्यते ।
अतुलां श्रियमाप्नोति लक्ष्मीकामो न संशयः ॥२८॥

बहुनात्र किमुक्तेन लभते यद्यदीप्सितम् ।

[ पाञ्चरात्रोपदेशानन्तरं रामस्यान्तर्ध्यानत्वम् ]

एतद्रहस्यमुदितं प्रीत्या त्वयि मुनीश्वर ॥२९॥

मुक्तस्त्वं किल्बिषात्सर्वात् व्रज स्थानमिति ब्रुवन् ।
आलोकितश्च स मया परमेष्ठी जगत्प्रभुः ॥३०॥

पश्यतोऽन्तर्दधे देवो रामो रक्तान्तलोचनः ।
सरहस्यमिदं शास्त्रमग्रहीषं जगत्प्रभोः ॥३१॥

ओं नमो वासुदेवाय निर्मलानन्तशक्तये ।
पुण्याय पुरुहूताय पुरुषाय परात्मने ॥३२॥

[ विष्णवाराधनफलकीर्तनं ग्रन्थोपसंहारश्च ]

अगस्त्यः

अनेन विधिना यूयमर्चयध्वमधोक्षजम् ।
सर्वपापहरं देवं जगद्बीजं परात् परम् ॥३३॥

तत्परं तत्परं तीर्थं तत्तपो मङ्गलं बहु ।
तेन सर्वं करतले भवत्यत्र न संशयः ॥३४॥

यः पूजयति देवेशं वासुदेवं सनातनम् ।
किं तस्य बहुभिस्तीर्थैः किं यज्ञैः किं व्रतैरपि ॥३५॥

---

२७. d: A. दृढम् M. ध्रुवम् for द्रुतम्;
३१. a: A. T. पश्यन्तो for पश्यतो;
d: A. अग्रणीषु for अग्रहीषम्;
३२. b: M. शान्तये for. शक्तये;
३४. b: M. गुरुः T. वसु for बहु;

तत्सर्वं विष्णुयजनात् हस्तप्राप्तं भविष्यति ।
तस्मात् सर्वप्रयत्नेन वासुदेवं समर्चयेत् ॥३६॥

इति शास्त्रं महद्दिव्यं गृहीतं भार्गवान्मुनेः ।
उपादिशत्तपस्विभ्यः अगस्त्यो भगवान् ऋषिः ।

॥ इति भार्गवतन्त्रे पञ्चविंशोऽध्यायः ॥

———

# परिशिष्टम्-१

## भार्गवतन्त्रे प्रयुक्ताः वैदिकमन्त्राः

| मन्त्राः | भार्गवतन्त्र-अ० श्लो० | वैदिकाकरः |
| --- | --- | --- |
| अग्निर्मूर्धा | १४.४२; | ऋ.वे ८.४४.१६; |
| अग्निर्मे | १५.१७; | तै० ब्रा० ३.१०.८.४; |
| | १५.३३; | |
| अग्नेनय सुपथा राये | १७.६६; | ऋ.वे. १.१८९.१; |
| अघोरचक्षुषा | १४.३७; | ऋ.वे. १०.८५ ४४; |
| अतो देवा | ६.६७; | ऋ.वे. १.२२ १६; |
| | | सा० वे० १६७४; |
| अपराजित | २०.१०४; | आपस्तंब मंत्रपाठः १.१३.४; |
| अर्यमण | १४ ४०; | अ.वे. सं. १४.१.१७; |
| अश्वक्रान्त | ६.५०; | तै० आ० १०.१.८; |
| | | म० ना० उ०४.४; |
| असुनीते | ७.६; | ऋ वे. १०.५९.६; |
| | ९.७१; | |
| असुन्वन्ते | २०.१००; | ऋ.वे. १.१७६ ४; |
| आत्वाहार्षं | १०.१८; | ऋ.वे. १०.१७३.१; |
| आप्यायस्व | २०.६७; | ऋ वे. १.९१.१६; |
| आमागन | १४.२१; | अथर्व वे. १९.३१.७; |
| आयानश्चाग्ने | २०.१००; | मैत्रायणीं सं.१.४.३; |
| आशासान सौमनसम | १४.४४; | अथर्व वे. १४.१.४२; |
| इदं मे वरुण | ६.७३;१४.११,१३; | ऋ.वे. १.२५.१९; |
| इदं विष्णु | ६.६७,७०; ७.११; ८.४२; १२.१५; २१.४४; | ऋ.वे. १.२२.१७; |
| इदमहं तु | १४.३८; | शतपथ ब्रा० १४.९.४.५; |
| इन्द्रं नत्वा | २०.५०; | ऋ.वे. ६.४.७; |
| इरावतीं | १४.२४; १६.५३; | ऋ.वे. ७.९९.३; |
| उत्तिष्ठ | १२.१४; १६.९; | ऋ.वे. १.४०.१; |
| उद्दीप्यस्व | १६.५४; | तै० आ० १०.१.४; |
| उद्वयं तमसे | ८.१४; | ऋ.वे. १.५०.१०; |
| ऋतं (च) सत्यम् | ६.६४; १६.५०; | ऋ.वे. १०.१९०.१; |

| मन्त्राः | भार्गवतन्त्र-अ० श्लो० | वैदिकाकरः |
|---|---|---|
| (ओं) कल्पयत | १४.२६; | तै० ब्रा० १.१.१४; |
| आमुत्सृजत | १४.२८; | तै० आ० ६.१२.१; |
| ओषधयः संवदन्ते | २०.६५; | ऋ वे. १०.९७.२२; |
| ओषधयस्त्वा | २०.६८; | तै० ब्रा० ३.७७.८; |
| गन्धद्वार | १६.५२; २०.६६; | ऋ.वे. (खि) ५ ८७.६; |
| गी (गि) र्वणा | १४.४३; | ऋ.वे ६ ४५.२०; |
| गौरसि (गौर्गौ' रसि) | १४.२७; | ऋ.वे. ६.४५.२६; |
| घृतं मिमिक्षि | ७.२३; २०.६६; | ऋ.वे. २.३.११; |
| चित्रं देवानाम् | ८.१६; | ऋ.वे. १.११५.१; |
| जीवां रुदन्ति | १४.३६; | ऋ.वे. १०.४० १०; |
| तच्चक्षु | ८.१६; | ऋ.वे ७.६६.१६; |
| तदस्य | ६.६६; ६.१५; | ऋ.वे. १.१५४.५; |
| तद्विप्रास | १६.४६; | ऋ.वे. १.२२.२१; |
| तद्विष्णो | १६.४६; २०.६६; | ऋ.वे. १.२२.२०; |
| तमीशानम् | २०.१०१; | ऋ.वे. १.८९.५; |
| त्रातारम् | २०.६८; | ऋ.वे. ६.४७.११; |
| त्रीणि पदा | १४.१६;१६.४८; | ऋ.वे. १.२२.१८; |
| त्र्यम्बक | १४.१४; | ऋ.वे. ७.५९.१२; |
| दधिक्राव्णेति | २० ६७; | ऋ.वे. ४.३९.६; |
| दम्पती | १४.५५; | ऋ.वे. २.३९.२; |
| देवस्य त्वेति | १४.३४; १६ ५८; | तै. आ. ३.१०; |
| धूरसि | १६.५४; | वा. सं. १.८; |
| ध्रुवं ते | १४.३६; | ऋ वे. १०.१७३.५; |
| ध्रुवा द्यौः | ६.६६; १०.१८; | ऋ.वे. १०.१७३.४; |
| सो अस्य | ६.६६; | ऋ.वे. १०.९३.३; |
| न ते विष्णो | २०.६७; | ऋ.वे. ७.९९.२; |
| परित्वा | १४.४३; | ऋ.वे. १.१०.१२; |
| परिवाज | ७.१२; ६.३७; | ऋ.वे. ४.१५.३; |
| प्रतद्विष्णु | ६.६६; | ऋ.वे. १.१५४.२; |
| प्रविष्णु | ६.६६; | ऋ.वे. ७.१००.३; |
| ब्रह्मजज्ञानम् | २०.१००; | अथ०वे. ४.१.१; |
| भूतं सेति (भूतमसीति ?) | १४.२६; | शां.श्री. सू. ८.२१.३; |
| मधुनक्तम् | २०.६५; | ऋ.वे. १.९०.७; |
| मधुमान्नो वनस्पति | २०.६५; | ऋ.वे. १.९०.७; |
| मधुवाता | २०.६५,६८; | ऋ.वे. १.९०.६,७,८; |

| मन्त्राः | भार्गवतन्त्र-अ० श्लो० | वैदिकाकरः |
|---|---|---|
| मयि मह | १४.१९; | ऐ० आ० ५.१.५.८; |
| मानस्तोक | ७.२४; | ऋ.वे. १.११४.८; |
| मूर्धानम् | ६.७२; १४.१२; | ऋ.वे. ६.७.१; |
| यन्मधुन | १४.२६; | हि. के० गृ. सू. १.१३.८; |
| यस्योरु | ६.६६; | ऋ.वे. १.१५४.२; |
| या ओषधी | २० ६६; | ऋ.वे. १०.९७.१८; |
| या जाता | १४.९; | सा.वे. सं. २.१४३; |
| यामाहर | १४.१८; | हि.के. गृ. स. १.११.४; |
| युवं वस्त्रेति | १४.२३; | ऋ.वे. १.१५२.१; |
| युवा सुवासा | १४.३०; १६.५१; | ऋ.वे. ३.८.४; |
| यो देवेभ्यः | २०.८१; | वा. सं. ३१.२०; |
| यो ब्रह्मो | ८.३१; १४.१६; | ऋ.वे. ७.६.११; |
| रक्षोहण | ७.३३; | ऋ.वे. १०.८७; |
| वास्तोस्पते प्रति | ७.१०; | ऋ.वे. ७.५४.१; |
| विचक्रमे | ६.६६; | ऋ.वे. ७.१००.४; |
| विराजो दोह | १४.२२; | शां० श्रौ. सू० ४.२१.३; |
| विश्वेत्तात | १४.१५; | ऋ.वे. ८.१००.६; |
| विष्णुः | १२.३९; | ऋ.वे. १०.१८४.१; |
| विष्णोः कर्म | २०.६७; | ऋ.वे. १.२२.१९; |
| विष्णोर्नुकम् | १६.५२; २०.६६; २३.१०; | ऋ.वे. १.१५४.१; |
| वेदाहम् | २०.६५; २०.८०; | तै. आ. ३.१२.१३; |
| व्यूक्षत्क्रूरम् | १४.४०; | आ. मं. पा. १.१.७; |
| शंते हिरण्यम् | १४.४१; | आ. मं. पा. २.८.९; |
| शन्नो देवीश्च | २०.६८; | ऋ.वे. १०.९.४; |
| शुभिके शिर | १४.१७; | आ. मं. पा. २.८.९; |
| संते पयांसि | ६.६५,६९; | ऋ.वे. १.९१.१८; |
| सविराज | ८.१६; | तै. १.७.१०.१; |
| सामो धेनु | ८.१५; १४.११; | शां. श्रौ. सू. ३.१६.४; |
| सुपर्णोऽसीति | ११.२९; | तै. ४.१.१०.५; |

## भार्गवतन्त्रे वैदिकसूक्तानि सामानुवाकादयश्च

| | |
|---|---|
| देवीसूक्तम् | १४.४६; |
| नारायणसूक्तम् | १३.४२; |
| नृसूक्तम् | १२.१२,३२,९९;<br>२१.४३,४९; |

पुंसूक्तम् २१.६५;
पुरुषसूक्तम् १३.४२; १४.४८;
पुरुषात्ममन्त्रः ११.२६;
पौरुषमन्त्रः ६.६०; १६.५०; २०.७३; २२.११०;
विष्णुसूक्तम् ६.१५;
श्रीसूक्तम् १०.६; १२.७२; १४.४७; २०.८३;
बृहत्साम ८.३२; ११.१३; १४.१६;
नारायणानुवाक् २०.३६;
त्रैलोक्यमन्त्रः २०.१०५;
पञ्चोपनिषन्मन्त्रः ७.८; १०.३६; १२.११२; १३. ४२; १४.५६; १६.१८; २२.६, ८, १६, १७; २३. १६;


## भार्गवतन्त्रे प्रयुक्ताः पूर्णमन्त्राः


ओं अग्नये स्वाहा १७.२७;

ओं नमो वासुदेवाय निर्मलानन्तशक्तये पृष्ठ १७५
पुण्याय पुरुहूताय पुरुषाय परात्मने २५.३२;

ओं भूतेभ्यः नमः १५.२१;

ओं भूर्भुवः सुवः स्वाहा ६ ७६;

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १.२६;
१६.५३;


———

# परिशिष्टम्-२

## पारिभाषिकपदानां लघुविवरणम्

### अक्षतद्रव्याणि

१ नीवारः २. वेणुशाली ३. प्रियङ्गुः
४. षाष्टिकः ५. गोधूमः ६. तण्डुलः
[ अ० २० श्लो० २१; ]

### अर्घ्यद्रव्याणि

१. कुशाग्रः २. अक्षतम् ३. सिद्धार्थः
४. तिलः ५. पुष्पम् ६. फलम् ७. यवः
८. चन्दनम्
[ अ० २०. श्लो० २४-२५; ]

### अष्टदेव्यः

१. वागीश्वरी २. क्रिया ३. कीर्ति ४. लक्ष्मीः
५. सृष्टिः ६. प्रह्वी ७. सत्या ८. ब्राह्मी;
[ अ० १५. श्लो० १३; ]

### अष्टबन्धद्रव्याणि

१. चूर्णः २. गुग्गुलः ३. लाक्षा ४. कुरुबिन्दम्
५. मधूच्छिष्टः ६. तुला ७. सर्पिस्
८. गैरिकः
[ अ० १०. श्लो० १९-२१; ]

### आचामद्रव्याणि

१. एला २. लवङ्गः ३. तक्कोलः ४. जातिः
५. कर्पूरः६. चम्पकः ७. चन्दनम् ८. कुसुमम्
[ अ० २० श्लो० २६-२७; ]

### आलयाः (विंशतिः)

१. मेरुः २. मन्दरः ३. कैलासः
४. विमानच्छन्दः ५. नन्दनम् ६. समुद्रः
७ पद्मम् ८. गरुडः ९. नदीवर्धनम्
१०. कुञ्जरः ११. गुहराजः १२. वृषः
१३. सिंहः १४. सर्वतोभद्रकः १५. घटः
१६. हंसः १७. वृत्तः १८. चतुष्कोणः
१९. षोडशाश्रः २०.अष्टाश्रः
[ अ. ३. श्लो १९-२१ ]

### उपचाराः—(नव)

१. अर्घ्यम् २. पाद्यम् ३. आचामम्
४. स्नानम् ५. वस्त्रम् ६. उपवीतम्
७. गन्धः ८. पुष्पम् ९. भूषणम्
[ अ० १३. श्लो० ३२-३३; ]

### कषायोदकद्रव्याणि

१. शमी २. पलाशः ३. खदिरः ४. बिल्वः
५. अश्वत्थः ६. विकङ्कतः ७. औदुम्बरः
८. न्यग्रोधः
[ अ० २०. श्लो० २८-२९; ]

### गन्धोदकद्रव्याणि

१. चन्दनम् २. अगरुः ३. कुष्ठः ४. मुरा
५. मांसी ६. कुंकुमम् ७. ह्रीबेरः ८. उशीरः
९. गिरिजः
[ अ० २०. श्लो० १९-२०; ]

### पञ्चगव्यद्रव्याणि

१. गोमूत्रम् २. गोमयः ३. क्षीरम्
४. दधि ५. सर्पिः
[ अ० २० श्लो २७-२८; ]

### पञ्चविधवर्णाः द्रव्याणि च

१. श्वेतवर्णः – (शालिपिष्टम्, गन्धचूर्णम्)
२. पीतवर्णः – (हरिद्रा)
३. नीलवर्णः – (यज्ञीयाङ्गारः)
४. श्यामवर्णः – (यज्ञीयदलचूर्णम्)
५. रक्तवर्णः – (कुंकुमम्)
[ अ० १३ श्लो० १६-१८; ]

### पञ्चाङ्गभूषणम्

१. हारः २. उपवीतम् ३. कटकः ४. केयूरः
५. अङ्गुलिभूषणम्

### पाद्यद्रव्याणि

१. तुलसी २. पद्मम् ३. दूर्वा ४. श्यामाकः
५. अक्षतम् ६. विष्णुक्रान्ता ७. बिल्बपत्र
८. चन्दम्

[अ० २०. श्लो० २३-२४]

### पुण्यसुमनसः

१. यूथिका २. मल्लिका ३. उत्पलम्
(त्रिप्रकारकम्) ६. जातिः ७. चम्पकम्
८. केतकी

[ अ० २० श्लो० ३२-३३ ]
(मण्डलकल्पनक्रमे)

### पुण्यस्नपनद्रव्याणि स्थानानि च

१. घृतम्—ब्राह्मे २. पाद्यम् —प्राच्याम्
३. अर्घ्यम्—याम्ये ४. आचामम् —वारुणे
५. पञ्चगव्यम् —उदीचिने ६. दधि—आग्नेये
७. पयः —नैरृते ८. मधु—मारुते
९. कषायः—ईशकोणे;

[ अ० २०. श्लो० ७८-८०; ]

### फलोदकद्रव्याणि

१. कदली २. बीजपूरः ३. आम्रम् ४. धातृ
५. बिल्वः ६. नालिकेरः ७ पनसः
८. मातुलुङ्गः

[अ० २०. श्लो० १५-१६;]

### बेर-पवित्राणि (दश)

१. प्रामाण्यम् २. ग्रन्थिसज्ञम् ३. अलङ्कारः
४ उत्तमम् ५. मध्यमम् ६. अधमम्
७. किरीटः ८. श्रीवत्सः ९. कौस्तुभः
१०. वनमाला

[अ० २१. श्लो० १३-१४;]

### भूतशुद्धिक्रमे अङ्गेषु वर्णन्यासक्रमः

१. प्रणवम् — नाभौ २. नकारः—मेहने
३. मोकारः—जानुयुगले ४. नाकारः—पादद्वये
५. राकारः—मूर्धनि ६. यकारः—नयनद्वये
७. णकारः— वदनाम्भोजे ८. यकारः—
हृदयाम्बुजे;

[अ० १६. श्लो० २३-२५;]

### मङ्गलोदकद्रव्याणि

१. इन्द्रवल्यङ्कुरः २. अश्वत्थपल्लव
३. कुशेशय; ४. एकपत्राम्बुज ५. कुष्ठः
६. कुंकुमम् ७. रोहिणीद्रुम ८. यूथिका
९. मल्लिका १०. त्रीण्युत्पलानि १३. जाति
१४ चम्पक १५. केतकी

[अ० २० श्लो० ३१-३३;]

### मार्जनद्रव्याणि

१. रजनी २. सूर्यवर्तिनी ३. सहदेवी
४. शिरीषः ५. सदाभद्रा ६. कुशाञ्चलः

[अ० २० श्लो० १८-१९;]

### मूलौषधिद्रव्याणि

१. व्याघ्री २. सिंही ३. बलाका ४. अग्निः
५ शरपुंखा ६. शतावरी ७. बिल्वमूलम्
८. वचा ९. शुण्ठी १०. कोरण्डः
११. शतमूलिका

[अ० २०. श्लो० ३९-४०;]

### मृत्तिकोदकद्रव्यस्थानानि

१. पुण्यक्षत्रम् २. नदीतीरम् ३. पर्वतः
४. पुलिसनम् ५. ह्लदः ६. निर्झरः ७. सङ्गमः
८. अशोष्यः ९ बेदिका १०. उर्वर
११. शालिक्षेत्रम् १२. देवखातः
१३. वृषशङ्गम् १४. हस्तिः १५. वराहधृष्टः
१६ वल्मीकः १७. कुलीरावसथः १८. नलिनी
१९ दीर्घिका

[अ० २०. श्लो० ४३-४५;]

### यवाम्बुद्रव्याणि

१. यवः २. व्रीहिः ३. वेणुः
[अ० २०. श्लो० २२;]

### रत्नोदकद्रव्याणि

१. माणिक्यम् २. पद्मरागम् ३. नीलम्
४. वज्रः ५. पुष्यकम् ६. प्रवालः ७. मौक्तिकम्
८. मरकतम् ९. वैडूर्यम्
[अ० २०. श्लो० १४-१५;]

### लोहोदकद्रव्याणि

१. सुवर्णः २. रजतः ३ ताम्र ४. सीसक
५. त्रपुक ६. कांस्यः ७. आयससारः
[अ० २०. श्लो० १६-१७;]

### शान्तिकुंभद्रव्याणि

१. तुलसी २. वेणुः ३. नीवारः ४. यवः
५ श्वेतसर्षपः ६ तिलः
[अ० २० श्लो० ३०-३१;]

### सर्वगन्धोदकद्रव्याणि

१. कर्पूरः २. कुंकुमः ३. कुष्टः ४. मांसीः
५. मलयजः ६. मुरा ७. प्रियङ्गुः
८. केसरः ९. मुस्ता १०. तमालः
११. नागकेसरः १२. मूलद्वयम् १३. कच्चोरः
१४. सुरसर्पिककेसरः १५. उशीरः १६. तगरः
१७. लोध्रः १८. हरिचन्दनम् १९. अगरुः
२०. उद्वासितकुष्ठः २१. कालेयः
२२. ग्रन्थिपल्लवः २३. मुकुलः (चम्पकस्य)
[अ० २०. श्लो० ३५-३८;]

### सर्वौषधिद्रव्याणि

१. मांसी २. कुष्ठः ३. हरिद्राद्वयम् ४. मुरा
५. चम्पकः शैलेयः ६. मुस्ता ७. वचा
८. कर्पूरः
[अ० २० श्लो० ३४-३५;]

### होमद्रव्याणि

१. यवः २ व्रीहिः ३. वेणुः ४. तिलः
५. लाजः ६. सुमम् ७. अगरुः ८. घृतम्
९. समिध्
[अ० २१ श्लो० ५०;]

———

# परिशिष्टम्-३

## स्नपनद्रव्यदेवानाम् विवरणम्

| स्नपनद्रव्याणि | देवताः | अध्यायसंख्या | श्लोकसंख्या |
|---|---|---|---|
| अक्षतवारि | अनन्तः | २० | ५६ |
| अर्घ्यवारि | मधुहन्ता | २० | ५७ |
| आचामवारि | त्रिविक्रमः | २० | ५७ |
| उष्णवारि | पुरुषः | २० | ५५ |
| ऐक्षवोदकम् | नृसिंहः | २० | ५९ |
| कषायाम्भः | दामोदरः | २० | ५९ |
| गन्धवारि | माधवः | २० | ५६ |
| गुडोदकम् | वराहः | २० | ५९ |
| घृतोदकम् | वासुदेवः | २० | ५५ |
| चूर्णोदकम् | लक्ष्मीः | २० | ४२ |
| दधिभाजनम् | श्रीधरः | २० | ५८ |
| दुग्धकुंभः | हृषीकेशः | २० | ५८ |
| नारिकेलोदकम् | श्रीधरः | २० | ६० |
| निशाचूर्णम् | | २० | ४२ |
| पञ्चगव्यम् | वामनः | २० | ५८ |
| पाद्योदकम् | विष्णुः | २० | ५७ |
| फलतोयम् | सत्यः | २० | ५५ |
| मङ्गलोदकम् | वासुदेवः | २० | ६० |
| मणिवारि | केशवः | २० | ५६ |
| मधु | पद्मनाभः | २० | ५८ |
| मूलौषधिः | अनिरुद्धः | २० | ६१ |
| यवोदकम् | गोविन्दः | २० | ५७ |
| लोहांभः | नारायणः | २० | ५६ |
| शान्तिवारि | हयास्यः | २० | ६० |
| सर्वगन्धवारि | प्रद्युम्नः | २० | ६१ |
| सर्वौषधिः | सङ्कर्षणः | २० | ६० |
| स्नानवारि | अच्युतः | २० | ५५ |

# परिशिष्टम्-४

## भगवतः उत्सवप्रसङ्गे उपयोगार्हाः स्वरतालादयः

| देवताः | स्वरः | नृत्तम् | तालः |
|---|---|---|---|
| चण्ड दिद्वारपालाः | ऋषभः | वैजयन्ती | मल्लः |
| खगेशः | मध्यमः | विष्णुक्रान्तम् | गारुडः |
| विष्वक्सेनः | ऋषभः | स्वस्तिकम् | बलिः |
| गणेशः | पञ्चमः | स्वस्तिकम् | बलिः |
| दुर्गा | धैवतः | सर्वमङ्गलम् | भद्रतालः |
| ब्रह्मा | मध्यमः | सर्वमङ्गलम् | ब्रह्मतालः |
| शुनासीरः | षड्जः | विलासम् | समतालः |
| वह्निः | ऋषभः | सर्वतोभद्रम् | बद्धावतालः |
| यमः | गान्धारः | खेटकम् | शृङ्गिणी |
| निरृतिः | मध्यमः | चक्रमण्डलम् | मल्लतालः |
| वरुणः | पञ्चमः | कान्तारम् | मङ्गलतालः |
| मरुत् | धैवतः | पृष्ठकुट्टिमम् | जयः |
| सोमः | निषादः | कटिबन्धनम् | भद्रः |
| शङ्करः | धैवतः | वामजानूर्ध्वम् | ढक्करी, |
| अन्य देवताः | पञ्चमः | सर्वमङ्गलम् | भद्रतालः |
| भूताः | गान्धारः | सर्वमङ्गलम् | बलितालः |

[भार्गवतन्त्रम् अ० १८ श्लो० १०-२३;]

————

# परिशिष्टम्-५

## दशपवित्राणां प्रमाणादिः

| पवित्रनाम | मानम् | ग्रन्थिसंख्या |
|---|---|---|
| प्रामाण्यपवित्रम् | नाभिपर्यन्तम् | द्वात्रिंशत् |
| ग्रन्थिपवित्रम् | हृदयान्तम् | पञ्चविंशतिः |
| अलङ्कारपवित्रम् | जङ्घान्तम् | द्वात्रिंशत् |
| उत्तमपवित्रम् | जानुसीमान्तम् | अष्टोत्तरशतम् |
| मध्यमपवित्रम् | ऊर्वन्तम् | अशीतिः |
| अधमपवित्रम् | नाभ्यन्तम् | षष्टिः |
| किरीटपवित्रम् | किरीटमानम् | द्वात्रिंशत् |
| श्रीवत्सपवित्रम् | स्तनपर्यन्तम् | सप्तविंशतिः |
| कौस्तुभपवित्रम् | हृदयान्तम् | द्वात्रिंशत् |
| वनमालापवित्रम् | चरणान्तम् | अनेकग्रन्थिसहितम् |

[भार्गवतन्त्रम् अ० २० १३-२०;]

———

# परिशिष्टम्-६

## वह्नेः सप्तजिह्वानां नामस्थानादयः

| नाम | | स्थानम् | | होमफलम् | | स्वरूपम् |
|---|---|---|---|---|---|---|
| १. काली | — | मध्यमे | — | शान्तिकर्म | — | कार्ष्ण्यम् |
| २. कराली | — | पूर्वदिशि | — | विजयदा | — | लौहित्यम् |
| ३. सुमना | — | आग्नेय्याम् | — | पुष्टिदा | — | लौहित्यम् |
| ४. लोहिता | — | वारुणे | — | वशीकरणम् | — | लौहित्यम् |
| ५. धूम्रा | — | सोमदिशि | — | मारणादिकर्म | — | श्यामवर्णा |
| ६. स्फुलिङ्गिनी | — | अनिलाश्रया | — | सर्वसिद्धिकर्म | — | स्फटिकाभा |
| ७. विश्वरूपा | — | ईशानकोणे | — | — | — | तपनीयनिभा |

[भार्गवतन्त्रम्-१७. २९-३५]

## अग्नित्रयपरिचयः

| नाम | | वयः | | उद्भवक्रमः: |
|---|---|---|---|---|
| १. नित्याग्निः | — | वृद्धः | — | लौकिकाग्निः |
| २. उत्सवाग्निः | — | युवा | — | सूर्यकान्तास्मजातः |
| ३. दीक्षादिकर्माग्निः | — | बालः | — | अरणिमथनोद्भूतः |

[भार्गवतन्त्रम् १७. ३६-३७]

———

# परिशिष्टम्-७

## श्लोकानुक्रमणिका

### अ


| श्लोकानां प्रथमः पादः | अध्यायसंख्या | श्लोकसंख्या |
|---|---|---|
| अक्षमालाप्रतिष्ठायाम् | १५ | ३२ |
| अक्षय्यसंख्यं तन्त्रं तत् | २ | १ |
| अगस्त्यं मुनिशार्दूलम् | १ | २ |
| अग्निं संसाध्य विधिवत् | ६ | ६९ |
| अग्निमध्ये तु कुण्डेषु | ६ | ३९ |
| अग्निः कनकवर्णाभः | ६ | १०० |
| अग्निर्मे वाचि मन्त्रेण | १५ | १६ |
| अग्नीन् विसर्जयेत् पश्चात् | १२ | ११३ |
| अग्ने नयेति मन्त्रेण | १७ | ६६ |
| अग्नेरुत्तरतः स्थाप्यम् | १७ | १७ |
| अग्नौ च हुत्वा देवेशम् | २५ | ८ |
| अग्रतः सेचयेन्मार्गम् | १० | १५ |
| अग्रमेकाङ्गुलं सार्धम् | ४ | ३७ |
| अग्रं त्र्यङ्गुलविस्तारम् | ४ | ७८ |
| अघमर्षणसूक्तं तत् | १२ | ८५ |
| अघोरचक्षुषा देवीम् | १४ | ३७ |
| अङ्कुराण्यर्पयित्वैवम् | ७ | १ |
| अङ्कुराण्यर्पयेत्पश्चात् | १९ | १९ |
| अङ्कुराण्यर्पयेत्पूर्वम् | २० | ४६ |
| अङ्कुराण्यर्पयेद्रात्रौ | २१ | २६ |
| अङ्कुराण्यर्पयेत् सद्यो | १४ | ८ |
| अङ्कुरार्पणभूभागम् | ५ | १८ |
| अङ्कुरेष्वप्रशस्तेषु | २२ | ७१ |
| अङ्गणे पीठिकास्थाने | ३ | ४६ |
| अङ्गदे कटके रम्ये | ४ | ८७ |
| अङ्गबिम्बाङ्गसन्धाने | १९ | ८ |
| अङ्गानि वेदाश्चत्वारः | २४ | ५७ |

| | | |
|---|---|---|
| अङ्गानि हृदयादीनि | १३ | ३४ |
| अङ्गुलं चाङ्गुलं सार्धम् | ४ | ६१ |
| अङ्गुष्ठतर्जनीमध्ये | ४ | ८३ |
| अङ्गुष्ठानामिकाभ्यां तु | ८ | २७ |
| अङ्गुष्ठे मूलविस्तारो | ४ | ४५ |
| अजीर्णं धाम बिम्बं वा | १९ | ५ |
| अज्ञातजातिभिश्चोरैः | २२ | ४३ |
| अतिप्रसन्नवदनम् | ९ | ३० |
| अतीन्द्रियममर्यादम् | ९ | २३ |
| अतुला श्रीश्च तस्य स्यात् | १० | ६१ |
| अतो देवा इदं विष्णुः | ६ | ६७ |
| अत्युग्रं तप आतिष्ठम् | १ | १३ |
| अत्युग्रं तप आतिष्ठम् | १ | ५४ |
| अत्युष्णमतिशीतं वा | २२ | १६ |
| अथ तेऽलङ्कृताः सम्यक् | ६ | ५६ |
| अथ पुण्यं प्रवक्ष्यामि | २० | ७७ |
| अथर्वणं तथोदीच्याम् | ९ | १३ |
| अथवा वैष्णवं स्नानम् | २० | २ |
| अथवाष्टाक्षरं मन्त्रम् | २५ | २१ |
| अद्भिरापूर्य चोत्पूय | १७ | १२ |
| अद्भिः परिसमूह्यास्त्रैः | १७ | ८ |
| अधिकारी परिज्ञातः | २२ | १०१ |
| अधिवासं प्रकुर्वीत | १२ | १० |
| अधिवासश्च कर्तव्यः | २३ | २ |
| अधीतान्यपि शास्त्राणि | १ | ४ |
| अधोमुखे वामहस्ते | ४ | ८४ |
| अध्यर्धमङ्गुलं वृत्तम् | ४ | ७० |
| अनन्त अक्षते कुंभे | २० | ५६ |
| अनन्तशयने देवे | २ | २९ |
| अनन्तः फणिनामिन्द्रः | २४ | ३ |
| अनन्तोऽथ मही पश्चात् | १६ | ३७ |
| अनर्घमक्षतमिदम् | ९ | ८७ |
| अनलं त्रिःपरिक्रम्य | १४ | ४९ |
| अनलाद्रसंयुक्ता | १६ | २२ |
| अनाप्लुत्य स्त्रियं गत्वा | २२ | ८ |
| अनिच्छन्निखिलं भोगम् | २ | १९ |

| | | |
|---|---|---|
| अनुज्ञातः समुत्थाय | १ | २५ |
| अनेकमूर्तये तुभ्यम् | १ | ३० |
| अनेकाभरणैर्युक्तम् | ९ | २४ |
| अनेन विधिना यूयम् | २५ | ३३ |
| अनेन सर्वं देवस्य | १३ | ५३ |
| अनेनैव प्रकारेण | २० | १०२ |
| अन्तर्बहिर्यदि हरिः | १ | १६ |
| अन्तर्हाराह्वयोपेते | ३ | ३७ |
| अन्तः प्रविश्य विन्यस्य | १० | ३८ |
| अन्तः प्रविश्य सदनम् | १८ | २ |
| अन्तः प्रवेशयेद्द्वम् | १० | १७ |
| अन्ते च विष्णुगायत्र्या | २० | ७६ |
| अन्नं निवेदयेत्तस्मै | १३ | ४४ |
| अन्नेनान्नादिकामस्तु | १७ | ४८ |
| अन्यं नीत्वावरोप्याथ | १२ | ६४ |
| अन्यदेवार्चितं पुष्पम् | २२ | २१ |
| अन्यद्यथावत्कर्तव्यम् | २२ | ७७ |
| अन्यत्सर्वं यथापूर्वम् | १५ | १४ |
| अन्यत्सर्वं यथापूर्वम् | २० | ८१ |
| अन्यत्सर्वं यथापूर्वम् | २० | १०६ |
| अन्यथा वा न कुर्वीत | १९ | ६ |
| अन्यान्यप्युपचाराणि | २ | १४ |
| अन्यासां यदि देवीनाम् | १४ | ४८ |
| अन्येन चोरुविश्रान्ताः | ४ | १०२ |
| अन्येषां परिवाराणाम् | १८ | २७ |
| अन्येषां विष्णुभक्तानाम् | १६ | ६४ |
| अन्येषामेवमेवोह्य | १५ | २२ |
| अन्यैश्च मङ्गलैः साकम् | १२ | ५४ |
| अपराह्णे तु सम्प्राप्ते | ८ | ६ |
| अपराह्णे तु सम्प्राप्ते | १२ | ७५ |
| अपिधाय ब्रह्मरन्ध्रम् | १० | ४३ |
| अपिधाय शरावेण | ८ | ४८ |
| अपिधाय स्त्रीशिलया | १० | ९ |
| अपिधाय स्रुवेणाथ | १७ | ७१ |
| अप्रमेयं धनं धान्यम् | ६ | ४ |
| अवलानुगुणैरन्यैः | ४ | ९९ |

| | | |
|---|---|---|
| अब्लिङ्गैः पवनैर्मन्त्रैः | ६ | ३४ |
| अभिषिच्य द्रव्यकुंभैः | २० | ६६ |
| अभीतिदं चर्मधरम् | १७ | २९ |
| अभ्यर्चयेच्च विधिवत् | १२ | २६ |
| अभ्यर्चयेद्यथापूर्वम् | १९ | ४० |
| अभ्यर्चयेद्यथायोगम् | २२ | ९३ |
| अभ्यर्च्य कुम्भमर्घ्याद्यैः | २९ | २३ |
| अभ्यर्च्य गन्धपुष्पाद्यैः | ७ | २३ |
| अभ्यर्च्य गन्धपुष्पाद्यैः | ९ | ८१ |
| अभ्यर्च्य विधिवत्सर्वम् | २२ | ९७ |
| अमारिक्ताष्टमीतिथ्यः | ६ | २२ |
| अमृताधानमन्त्रेण | १४ | २७ |
| अमृतोपस्तरणमसी | १४ | २६ |
| अम्भोजदलतुल्यानि | १३ | १६ |
| अयाज्ञियैः कोद्रवाद्यैः | २२ | १५ |
| अयुतं होम उदितो | २२ | ३९ |
| अयोग्यं तुच्छितं धीमान् | २९ | ३ |
| अरणीमथनाज्जातः | १७ | ३७ |
| अर्घ्यं पाद्यं तथाचामम् | ९ | १८ |
| अर्घ्यादिप्रणवान्तं तम् | २० | ६४ |
| अर्घ्याद्यैरर्चयेद्देवम् | १७ | ६९ |
| अर्घ्याद्यैरुपचर्याथ | ९ | ४८ |
| अर्चयेद्गन्धपुष्पाद्यैः | १० | २ |
| अर्चयेद्देवदेवेशम् | १० | ४७ |
| अर्चयेद्देवदेवेशम् | २२ | ७ |
| अर्धमण्डपकद्वारे | ३ | २९ |
| अर्धमण्डपमानेन | ३ | २४ |
| अर्धरात्रे तु सम्प्राप्ते | १२ | ९४ |
| अर्हणीया आप इति | १४ | २१ |
| अलङ्कुर्याद्यथायोगम् | ८ | ५३ |
| अलम्बुसायां कुकरम् | ६ | ६९ |
| अलाभे ऋत्विजां यज्ञम् | ६ | ११ |
| अलाभे चापि चक्रस्य | १२ | १०७ |
| अलाभे सर्वकुण्डेषु | ९ | ४२ |
| अवन्यां विसृजेच्छेषम् | १७ | ६४ |
| अशक्तश्चेत् त्रिपादं वा | १० | ५१ |

| | | |
|---|---|---|
| अशक्ये तूच्छ्रिते धाम्नि | १९ | २ |
| अशीति पक्षरोमाणि | ४ | ५६ |
| अश्वत्थदलवद् श्याम् | ५ | १६ |
| अश्वत्थोदुम्बरवट | ८ | ५ |
| अश्वमेधसहस्राणि | १३ | ५२ |
| अष्टबन्धनवस्तूनि | ५ | ४२ |
| अष्टभिर्वा चतसृभिः | ४ | ९३ |
| अष्टभिश्चापि देवीभिः | ९ | २९ |
| अष्टभिश्च भवेत्तस्या | ४ | ७३ |
| अष्टाक्षरं ततो मन्त्रम् | १२ | ११८ |
| अष्टाक्षरमनुं वक्ष्ये | २४ | ४१ |
| अष्टाक्षरस्य मन्त्रस्य | १० | २८ |
| अष्टाङ्गुला तदर्धा वा | १७ | ५१ |
| अष्टादशाङ्गुलमुरः | ४ | ६६ |
| अष्टाविंशतिभिर्दर्भैः | ७ | २९ |
| अष्टाविंशतिरष्टौ वा | १२ | ३२ |
| अष्टोत्तरशतं वारान् | ७ | ११ |
| अष्टोत्तरशतं होमः | ९ | ४६ |
| अष्टोत्तरशतं होमो | २१ | ५१ |
| अष्टोत्तरशतं होमो | २२ | ३८ |
| अष्टोत्तर सहस्रं वा | २५ | ७ |
| अष्टौ देवीः श्रियाद्याश्च | ४ | ९१ |
| असंख्यातमिदं शास्त्रम् | २ | ७ |
| असुनीतेति मन्त्रेण | ७ | ६ |
| असुन्वन्तेति च ऋचा | २० | १०१ |
| अस्ताचलं गतश्चन्द्रः | १६ | ६ |
| अस्नातोऽनुपनीतो वा | २२ | ३ |
| अस्पृश्यैरपि शूद्राद्यैः | २२ | १४ |
| अस्मादालोकनेनैव | १ | ५९ |
| अस्वतन्त्राः यदा देव्याः | ४ | १०० |
| अहंकृति ततो बुद्धौ | ९ | ५० |
| अहो रक्षो द्वयं नष्टम् | १ | ८ |

आ

| | | |
|---|---|---|
| आकाशवाणीमश्रौषम् | १ | १४ |
| आग्नेयादिषु कोणेषु | १२ | २५ |

| | | |
|---|---|---|
| आग्नेयैशानयोः स्थाप्या | १७ | २३ |
| आघोष्य चतुरो वेदान् | १६ | ५५ |
| आचामो विष्णुगायत्र्या | १६ | ४९ |
| आचार्यदक्षिणकरे | ४ | ४ |
| आचार्यदेवपद्मानाम् | २१ | ११ |
| आचार्यस्तोषयित्वा तान् | ६ | ३० |
| आचार्याणां मूर्तिपानाम् | ८ | २९ |
| आचार्यो ऋत्विजाश्चान्ये | १० | १६ |
| आचार्यो वापयेद्बीजम् | ६ | ७२ |
| आच्छाद्य नववस्त्रेण | ६ | ५२ |
| आजानुदीर्घैः पृथुलैः | ९ | ३५ |
| आजानुपादौ प्रक्षाल्य | ६ | ३६ |
| आज्यपात्रं चरुं स्थाली | १७ | ४ |
| आज्यस्थाल्यां न्यसेन्मूलम् | १७ | ६२ |
| आढकद्वयमात्रेण | ७ | २१ |
| आत्मनोऽग्रे स्रुवं याम्ये | १७ | ६१ |
| आत्मानं मन्यते शेषम् | २४ | ११ |
| आत्वाहार्षं प्रतिष्ठासि | १० | १८ |
| आदद्यान्मुद्रया मुष्ठ्या | १७ | २५ |
| आदाय क्षालयित्वाद्भिः | २१ | ८ |
| आदित्यमपरेऽपीन्दुम् | ८ | १५ |
| आदिमध्यान्तशून्याय | १ | ३५ |
| आद्यन्तयोस्तु पत्राणाम् | १३ | २१ |
| आद्यैश्च मूलमन्त्रस्य | १६ | १६ |
| आधारशक्त्यादिमन्त्रैः | १७ | ५४ |
| आनीतानि यथायोग्यम् | १६ | ५७ |
| आयामसमविस्ताराम् | १० | ३ |
| आयुधैः सह देवीभिः | ११ | ५१ |
| आयुश्च ज्ञानमतुलम् | २५ | २३ |
| आयुष्कामस्तु दूर्वाभिः | १७ | ४५ |
| आयुष्कामो दीर्घमायुः | २५ | २८ |
| आरब्धायां तु पूजायाम् | २२ | १८ |
| आराधनं त्वं देवेश | १७ | ६७ |
| आराधनमिदं भक्त्या | २१ | ६१ |
| आराधितो यदि हरिः | १ | १५ |
| आरुढं पक्षिराजे वा | ४ | ८९ |

| | | |
|---|---|---|
| आरोग्यं पुत्रसम्पत्तिम् | २५ | २३ |
| आरोप्य चैवं विहगम् | ११ | ३० |
| आरोप्य देवं भूषाद्यैः | १२ | १० |
| आलयाभ्यन्तरं गत्वा | १३ | २ |
| आवाह्यामिति संकल्पः | १४ | ३८ |
| आवाहनं तु सर्वत्र | ९ | १३ |
| आवाहनं महाकुंभे | १५ | ६ |
| आवाहनप्रोक्षणादि | १० | ३० |
| आवाहनाह्वयं पात्रम् | १६ | ३० |
| आवाहयेत् पिण्डिकायाम् | १० | १० |
| आवाहयेन्महाकुंभे | ८ | ५५ |
| आवाह्य गन्धपुष्पाद्यैः | ६ | ६८ |
| आवाह्य देवमभ्यर्च्य | २३ | ५ |
| आवाह्य पूजयेद्धोमम् | १५ | १८ |
| आवाह्य भूमिमन्त्रेण | ६ | ४३ |
| आवाह्य मूलमन्त्रेण | १० | २४ |
| आवाह्याथ यथान्यायम् | २३ | १६ |
| आशास्वष्टस्वष्टकुंभान् | ८ | ४४ |
| आश्रमेषु मुनीनां च | ३ | १० |
| आश्रितानां च भक्तानाम् | १८ | ३० |
| आश्रितानां तु पार्थक्यम् | १९ | २९ |
| आसने प्राङ्मुखो भूत्वा | १६ | २ |
| आसितैर्नैमि वसतिम् | १३ | २३ |
| आसीनः प्राङ्मुखो भूत्वा | ६ | ४० |
| आसीनेऽश्रायतं यद्वा | ४ | ११५ |
| आहूय देवताः सर्वाः | ११ | ५३ |
| आह्वानार्थमशेषाणाम् | ११ | ३८ |

इ

| | | |
|---|---|---|
| इतः प्रभृति युष्माभिः | ९ | ९४ |
| इति तं प्रार्थयेद्देवम् | २१ | ६३ |
| इति पुष्पाञ्जलिं सम्यक् | ११ | ३६ |
| इति प्रार्थ्य खगेशानाम् | ११ | २७ |
| इति प्रार्थ्य ततो देवम् | १९ | २७ |
| इति बीजानि संजप्त्वा | १४ | १० |
| इति मन्त्रेण भूतेभ्यो | २१ | ४० |

| | | |
|---|---|---|
| इति विज्ञाप्य देवेशम् | १३ | ३१ |
| इति शास्त्रं महद्दिव्यम् | २५ | ३७ |
| इनि सम्प्रार्थ्य सान्निध्यम् | ११ | २० |
| इति स्तुत्वा च नत्वा च | ६ | ५० |
| इत्यादिमानसेनैव | १६ | २८ |
| इत्युक्तो जामदग्नेन | १ | ४६ |
| इत्येते विंशतिः प्रोक्ताः | ३ | २१ |
| इत्येष कथितो ब्रह्मन् | २१ | ६६ |
| इदं विष्णुरिति श्रुत्या | ६ | ७० |
| इदं विष्णुरिति श्रुत्या | १२ | १५ |
| इदमाराधनं विष्णोः | १६ | ६८ |
| इन्द्रादयो लोकपालाः | ३ | ३६ |
| इन्द्रादीनग्निकुण्डस्य | १७ | १९ |
| इन्द्राद्वा वरुणाद्वापि | १ | ४३ |
| इमं मे वरुणेत्येव | ६ | ७३ |
| इमं मे वरुणेत्येव | १४ | २३ |
| इष्टापूर्तेन लभ्यन्ते | ३ | ३ |

ई

| | | |
|---|---|---|
| ईदृशं मङ्गलदिनम् | ६ | २७ |
| ईशानभागे ग्रामस्य | ७ | १३ |

उ

| | | |
|---|---|---|
| उच्छ्रायः परिवाराणाम् | ४ | ११८ |
| उच्छ्रायात्पादविस्तीर्णा | ३ | १५ |
| उत्तरत्रितये स्वातौ | २१ | ६ |
| उत्तरे विष्टरे बिम्बम् | ८ | १० |
| उत्तरोष्ठायतं सार्धम् | ४ | ६४ |
| उत्तिष्ठोत्तिष्ठ गोविन्द | १६ | १० |
| उत्सवं कारयेद्धीमान् | २२ | ६५ |
| उत्सवं चान्वहं कुर्यात् | १४ | ५३ |
| उत्सवप्रतिमां तत्र | ११ | २८ |
| उत्सवप्रतिमां पश्चात् | ११ | ३७ |
| उत्सवान्तं परमधाम्नः | ११ | २६ |
| उत्सवान्ते हरिं तत्र | १८ | २५ |

| | | |
|---|---|---|
| उत्सवारंभदिवसात् | १२ | १ |
| उत्सेधमानं मूर्धादि | ४ | ९ |
| उत्सेधे बालबिम्बस्य | १६ | १३ |
| उदकं च प्रदातव्यम् | १८ | १० |
| उदगग्रा च परिधिः | १७ | २२ |
| उदगुत्तीर्य तत्पात्रम् | १७ | १६ |
| उदग्रवदनो भूत्वा | ११ | ३३ |
| उदानं हस्तिजिह्वायाम् | ९ | ६८ |
| उद्यानानि च रम्याणि | २ | १७ |
| उद्वास्य देवताः सर्वाः | ८ | ७ |
| उद्वाहदिवसात् पूर्वम् | १४ | ५ |
| उद्वाहशेषहोमं तत् | १४ | ५५ |
| उद्वाहहोमं कुर्वीत | १४ | ४५ |
| उद्वाहानन्तरं देवम् | १४ | ५६ |
| उन्मील्य दक्षिणं नेत्रम् | ८ | १८ |
| उपकुंभाम्बुभिः पश्चात् | १० | ४२ |
| उपकुंभाष्टकयुतम् | २० | १०४ |
| उपकुर्वन्ति ये मर्त्याः | १० | ६२ |
| उपानहादि पश्चाङ्गम् | ४ | ११२ |
| उपेन्द्रं गोपुरशिरो भागे | ३ | ४४ |
| उपेन्द्रः प्राकृतः पुण्यः | ३ | ४५ |
| उशीरं तगरं लोध्रम् | २० | ३७ |
| उष्णीषं कवचं चापि | १२ | ९१ |
| उष्णीषात्पार्श्वकेशान्तम् | ४ | ७१ |


ऊ


| | | |
|---|---|---|
| ऊर्ध्वं चक्रमधः पद्मम् | २१ | ३८ |


ऋ


| | | |
|---|---|---|
| ऋग्यजुः सामवेदानाम् | १२ | ७७ |
| ऋजुबुद्धिं सदा ब्रह्म | ६ | ८ |
| ऋतं सत्यमिति श्रुत्या | १६ | ५० |
| ऋतं सत्येति मन्त्रेण | ६ | ६४ |
| ऋत्विक्षु शान्ति मन्त्राणि | १० | २५ |
| ऋत्विग्भिः सहितः कुंभान् | २० | ७१ |

| | | |
|---|---|---|
| ऋत्विग्भ्यः सहकारिभ्यो | २३ | ७ |
| ऋषिभिश्च मरीच्याद्यै | ९ | २५ |
| ऋषिर्नारायणो देवो | २४ | ४५ |
| ऋषीणामग्निकल्पानाम् | १ | ५७ |
| ऋषीणामग्निकल्पानाम् | ११ | ५० |

## ए

| | | |
|---|---|---|
| एकत्रिंशद्यवायामा | ४ | २२ |
| एकपत्राम्बुजं कुष्ठम् | २० | ३२ |
| एकबेरविधानं चेत् | २० | ९८ |
| एकबेरे तदितरे | २१ | ३३ |
| एकबेरे मूलबेरम् | १२ | १०० |
| एकस्मिन्नेव कुण्डे | १५ | ७ |
| एकस्मिन्नेव कुर्वीत | ११ | १३ |
| एकस्मिन्नेव कुर्वीत | १५ | ३८ |
| एकादशाङ्गुलं वृत्तम् | ४ | ९५ |
| एकायनप्रविष्टानाम् | २४ | २७ |
| एकाहपूजावैकल्ये | २२ | ३० |
| एकीकृत्य द्वयं क्षेत्रम् | १३ | १५ |
| एकैकमपि पर्याप्तम् | २ | १० |
| एतच्छ्रुत्वा ततो देवो | १ | ५६ |
| एतच्छ्रुत्वा महातेजाः | १ | ६ |
| एतच्छ्रुत्वाम्बराद्वाणीम् | १ | १८ |
| एतज्जपन् सदा ध्यायन् | २४ | ५८ |
| एते पाद्यमयाः प्रोक्ताः | १६ | ३९ |
| एतेषान्तु नमोन्तेन | १६ | ४३ |
| एतेषामुदकुंभानाम् | २० | ९१ |
| एते ह्यष्टाक्षरान् जप्तुम् | २४ | ४० |
| एलालवङ्गतक्कोल | २० | २६ |
| एवं चतुर्विधैर्युक्तः | १६ | १५ |
| एवं ध्यात्वा जपेन्मन्त्रम् | २४ | ५५ |
| एवं ध्यायेत् परं ब्रह्म | २५ | १६ |
| एवं निरवशेषेण | ९ | ७५ |
| एवं निवेद्य विधिवत् | १६ | ५९ |
| एवं महोत्सवं कुर्वन् | १३ | ५१ |
| ऐवं महोत्सवं कृत्वा | १३ | ४९ |

| | | |
|---|---|---|
| एवं महोत्सवे विष्णोः | १२ | ६२ |
| एवं यः स्थापयेद्देवम् | १० | ५६ |
| एवं रजस्वलावस्त्रम् | २२ | ६ |
| एवं शुद्धे नदीतोये | ७ | ३८ |
| एवं संस्थाप्य देवेशम् | १० | ५७ |
| एवं संस्थाप्य मेधावी | ८ | ५४ |
| एवं समाप्य तां पूजाम् | ६ | २० |
| एवं समाप्य मेधावी | १६ | ३२ |
| एवं स्तुतो जगन्नाथः | १ | ४१ |
| एवमादिषु चान्येषु | २३ | १० |
| एवमावाह्य देवेशम् | १० | २६ |
| एवमाहूय मेधावी | ११ | ५५ |
| एषादीक्षा द्वितीया स्यात् | | |

ऐ

| | | |
|---|---|---|
| ऐन्द्रं च जुहुयादग्नौ | १७ | २६ |
| ऐन्द्रे शुद्धोदकुंभानाम् | २० | १०५ |
| ऐशान्यां विश्वरूपी तु | १७ | ३२ |

ओ

| | | |
|---|---|---|
| ओं नमो वासुदेवाय | २५ | ३२ |
| ओं भूर्भुवः सुवः स्वाहा | ६ | ७६ |
| ओतदेहेन जीवात्मा | २४ | ४२ |

क

| | | |
|---|---|---|
| ककारोऽम्बरतत्त्वात्मा | ६ | ६४ |
| कक्षयोर्मध्यविस्तारः | ४ | ३४ |
| कटिप्रदेशविस्तारः | ४ | ३६ |
| कटिप्रदेशविस्तार | ४ | ७६ |
| कथं नु देवदेवीयम् | १४ | १ |
| कथं नु भगवन् विष्णो | ५ | १ |
| कथं महोत्सवविधिः | ११ | १ |
| कथं वयं समुत्तीर्णाः | १ | ५ |
| कथं वा वासुदेवस्य | ४ | १ |
| कदम्बमुकुलाकारम् | २५ | १७ |
| कदली नारिकेराद्यैः | ८ | २५ |

| | | |
|---|---|---|
| कनिष्ठाङ्गुष्ठतुलिता | ४ | २७ |
| कम्यकारुचिराश्चापि | ५ | ३७ |
| कम्बुकण्ठं महासत्वम् | ६ | ३२ |
| करकं विन्यसेत् कुंभान् | १२ | २३ |
| करकेण समायुक्तम् | ८ | ४६ |
| कराकिला विजयदा | १७ | ३४ |
| कर्णिकां पीतवर्णेन | १३ | १९ |
| कर्णिकाक्षेत्रमानेन | १३ | ६ |
| कर्णिकायां वासुदेवम् | १३ | ३२ |
| कर्तव्यमखिलं पश्चात् | २२ | ७६ |
| कर्मबिम्बं च निर्मेयम् | ४ | १०४ |
| कर्माङ्गस्नपनं कुर्यात् | २३ | १२ |
| कर्मार्चादीनि यद्वत् स्यात् | ४ | १०९ |
| कर्मार्चा सहजे पीठे | १६ | ४५ |
| कर्मावसाने ब्रह्मादीन् | १७ | ६० |
| कर्मिणां तु पुनर्जन्म | १० | ६६ |
| कर्षणादिक्रियास्वेते | २४ | २३ |
| कर्षणादिप्रतिष्ठान्ता | २२ | ९८ |
| कल्पयेत्कर्णिकाक्षेत्रे | १३ | १२ |
| कल्पान्ते सागरे क्षुब्धे | २४ | ५ |
| कल्याणकौतुके कुंभे | २१ | ४५ |
| कल्याणस्नपनं कृत्वा | २२ | २२ |
| कषायमीशकोणे च | २० | ८० |
| कस्मिंश्चित् दिवसे पश्चात् | १२ | ७४ |
| कांस्यमायससारं च | २० | १७ |
| काकपाषण्डपतित | २२ | १० |
| कालद्वयेऽपि होमं च | २१ | ६४ |
| किं तद्धर्यर्चनातन्त्रम् | १ | ६१ |
| किं पुनः फलमिच्छद्भिः | १० | ६८ |
| किं पुनर्देवदेवस्य | २२ | १०४ |
| किङ्करो हरिभक्तानाम् | २४ | १७ |
| किञ्चिदन्येन पात्रेण | १६ | ३४ |
| किमर्थं कुंभतनय | १ | ४२ |
| किरीटं कुण्डले हारान् | ४ | ८६ |
| किरीटकुण्डलधरम् | ११ | ७ |
| किरीटहारकेयूर | २४ | ५२ |

| | | |
|---|---|---|
| कीदृशोऽप्यधिकारी वा | ६ | २ |
| कुंभप्रतिकृतिः पञ्च | ५ | ३५ |
| कुंभमेकं समभ्यर्च्य | १५ | ४० |
| कुंभयोरुभयोस्तत्र | ९ | ७ |
| कुंभयोर्वीरसेनं च | ९ | १० |
| कुंभान्तरं तु संस्थाप्य | २२ | ६३ |
| कुंभाय च यथाशास्त्रम् | ११ | २१ |
| कुंभेभ्यः देवताः सर्वा | ८ | ११ |
| कुङ्कुमक्षोदकर्पूर | १२ | ८२ |
| कुण्डं च हव्यवाहं च | २१ | ५२ |
| कुरुतेऽक्षततोयेन | २२ | ३६ |
| कुर्यादनेन मन्त्रेण | २४ | ५६ |
| कुर्वन्तु विघ्नं ये भूताः | ९ | ९० |
| कुर्वीत स्विष्टकृद्धोमम् | १७ | ७३ |
| कुर्वीरन् यदि कर्माणि | २२ | ५३ |
| कुशैः काशैस्तृणैश्चान्यैः | १९ | ३३ |
| कुशैः काशैस्तृणैश्चापि | ७ | ३ |
| कुशोदकेन स्नपनम् | २२ | १३ |
| कुसुमैरप्यलङ्कृत्य | ७ | ४ |
| कूपेषु च तटाकेषु | ९ | ८४ |
| कूर्चग्रन्थिं विसृज्याद्भिः | १७ | १८ |
| कूर्चाग्रपतितैर्धीमान् | १२ | १०६ |
| कूर्चेन पल्लवन्यासः | २० | ५२ |
| कूर्चेन शयनं कार्यम् | ४ | १०७ |
| कूर्माकारं लिखेत्तत्तत् | ५ | २७ |
| कृच्छ्रेष्वप्यतिसंतुष्टः | २४ | १५ |
| कृत्तो वनस्पतिरिव | १ | २४ |
| कृत्वा च नित्यहोमान्तम् | १२ | १९ |
| कृत्वा तत्तद्विद्ययैव | ९ | ७४ |
| कृत्वा तु स्विष्टकृद्धोमम् | १२ | ४० |
| कृत्वा प्रभूतं सलिलम् | ३ | २ |
| कृत्स्नस्य पाञ्चरात्रस्य | २४ | ८ |
| कृष्णमण्डलविस्तारो | ४ | ९८ |
| केवलेनैव तूर्येण | १२ | ११६ |
| केसरेषु श्रियाद्यष्टौ | १३ | ३६ |
| कैवल्यशान्तिं कृत्वाथ | २२ | १०६ |

| | | |
|---|---|---|
| को वा व्यातुं क्षमो लोके | ६ | २६ |
| कौतुकं बन्धयेत्कुंभे | १५ | २६ |
| क्रौञ्चक्रौञ्चीकलापाश्च | ३ | ७ |
| क्लेशवासं गते देवे | २२ | १०३ |
| क्लेशावधावतिक्रान्ते | २२ | ८६ |
| क्षुधितो वा न तृषितः | २४ | १४ |

ख

| | | |
|---|---|---|
| खद्योतवर्षसंस्पर्शे | २२ | ५७ |
| खात्वा द्वितालं धरणीम् | ८ | ४ |

ग

| | | |
|---|---|---|
| गङ्गाद्यास्सरितस्तत्र | १२ | ८४ |
| गङ्गाद्याः सरितस्तत्र | १५ | ३१ |
| गण्डातिगण्डयोगेन | ६ | २१ |
| गन्धं ददाति यो भक्त्या | २ | २३ |
| गन्धं पुष्पं तथा धूपम् | १६ | २७ |
| गन्धं पुष्पं भूषणं च | १३ | ३३ |
| गन्धद्वारेति मन्त्रेण | १६ | ५२ |
| गन्धर्वलोके वसतिः | १० | ६४ |
| गन्धवस्तुभिरालिप्य | २१ | ३६ |
| गन्धर्वेभ्यश्च यक्षेभ्यः | १२ | ३८ |
| गन्धोद्गारीणि धूपानि | १२ | ५३ |
| गमयित्वोत्सवाङ्गेन | १२ | १०३ |
| गम्भीरवेदनिर्घोष | ६ | १ |
| गर्भगेहप्रवेशश्चेत् | २२ | ४६ |
| गर्भगेहसमायामम् | ३ | २३ |
| गलमर्धाङ्गुलं सार्धम् | ४ | १३ |
| गायन्तश्चापि नृत्यन्तः | १८ | ५ |
| गीतं नृत्यं तथा वाद्यम् | २ | २८ |
| गीतवादित्रकुशलान् | ११ | ४३ |
| गीतवादित्रघोषेण | १० | ५८ |
| गीतवादित्रनिर्घोषैः | ६ | १०१ |
| गुल्फं पादाङ्गुलोत्सेधम् | ४ | ६६ |
| गुहराजो वृषो सिंहः | ३ | २० |
| गुहार्चा स्थापने सर्वम् | १५ | ४१ |

| | | |
|---|---|---|
| गोपनीयमिदं शास्त्रम् | २५ | २६ |
| गोमयालेपिते भूमि | ९ | ८२ |
| गोमयालेपिते भूमौ | ६ | ३२ |
| गोमयेन समालिप्ताम् | ६ | ५८ |
| ग्रन्थिं विसृज्य कूर्चस्य | १७ | २१ |
| ग्रन्थीनां पूरणं कुर्यात् | २१ | २५ |
| ग्रामं प्रदक्षिणीकृत्य | १९ | ३४ |
| ग्रामस्य परितो वीथ्याम् | ११ | ५४ |

घ

| | | |
|---|---|---|
| घटोघ्नीर्गास्सवत्साश्च | १० | ५० |
| घृतं ब्राह्मे न्यसेत् कुंभम् | २० | ७८ |
| घृतं मध्ये दध्यनले | २० | ९६ |
| घृतकुंभं पदे ब्राह्मे | ८ | ३४ |
| घृतकुंभे वासुदेवः | २० | ५५ |
| घृतमुष्णोदकं रत्नम् | २० | ९ |
| घ्राणात्मा तु टकारः स्यात् | ९ | ५९ |

ङ

| | | |
|---|---|---|
| ङकारः पृथिवीतत्त्वम् | ९ | ६२ |

च

| | | |
|---|---|---|
| चक्रवाकद्विजगणैः | १६ | ९ |
| चक्राब्जं वर्तयेद्धीमान् | १३ | ३ |
| चक्राब्जमण्डले दीक्षा | २४ | २९ |
| चक्री च मुसली शंखी | ३ | ४१ |
| चक्षुः कनीनिकायामो | ४ | ५४ |
| चण्डप्रचण्डावारभ्य | १८ | ७ |
| चण्डादिदेवतानां च | १५ | ३६ |
| चण्डादिद्वारपालानाम् | १२ | ४३ |
| चण्डादीनां च पीठानाम् | ९ | ७३ |
| चतस्त्रः समिधः प्रोक्ता | ९ | ४१ |
| चतुरङ्गुलमानैव | ५ | १४ |
| चतुरश्रं भवेत्प्राच्याम् | ५ | ६ |

| | | |
|---|---|---|
| चतुर्द्वारसमायुक्तम् | ५ | ४ |
| चतुर्भुजमुदाराङ्गम् | ६ | २७ |
| चतुर्भुजमुदाराङ्गम् | २४ | ५१ |
| चतुर्यवं चुचूकं स्यात् | ४ | ६९ |
| चतुर्विंशतिमानेन | ४ | १० |
| चतुर्विंशाङ्गुलं सूत्रम् | ५ | ७ |
| चतुर्वेदविदो विप्रान् | २१ | ३४ |
| चतुर्ष्वपि च कोणेषु | १३ | ११ |
| चतुष्पलानि प्रत्येकम् | २० | २८ |
| चतुष्षष्टिपदं कार्यम् | ३ | १२ |
| चत्वारिंशद्यवं कर्ण | ४ | ५७ |
| चत्वारिंशत्सहस्रेण | २ | ४ |
| चरणद्वन्द्वविजित | ९ | ३४ |
| चरुणाथ नृसूक्तेत | २१ | ४३ |
| चरुणा विष्णुगायत्र्या | १४ | ४७ |
| चर्महीने विनाशः स्यात् | १७ | ३९ |
| चातुर्वर्णस्याश्रमिणाम् | २१ | २७ |
| चातुर्वर्ण्योऽनुलोमो वा | ६ | ६ |
| चित्रं देवा च तच्चक्षु | ८ | १९ |
| चिन्मात्ररूपिणे तुभ्यम् | १ | ३१ |
| चिराय पूजालोपे वा | २३ | ९ |
| चूर्णकुंभे भवेल्लक्ष्मीः | २० | ६२ |

छ

| | | |
|---|---|---|
| छकारः पायुतत्त्वात्मा | ९ | ६१ |
| छत्रं च बालव्यजनम् | १२ | ५२ |
| छायाधिवासं कुर्वीत | ७ | २७ |
| छायास्नपनमादर्शे | १५ | १६ |
| छिद्रयन्ति च कर्माणि | २१ | ३९ |

ज

| | | |
|---|---|---|
| जङ्घामध्यस्य विस्तारो | ४ | ८० |
| जपः पञ्चोपनिषदाम् | २२ | ६ |
| जपेदष्टाक्षरं मन्त्रम् | १६ | ६२ |
| जपेदष्टाक्षरं मन्त्रम् | २२ | ५ |

| | | |
|---|---|---|
| जपैर्ध्यानेन च हरेः | २१ | ३१ |
| जयश्च विजयश्चोभौ | ३ | ३० |
| जलाधिवासं कुर्वीत | ७ | ४३ |
| जलाधिवासनं नैव | १५ | ३० |
| जलाधिवासरहितम् | २२ | ८४ |
| जलाधिवासाद्यखिलम् | १९ | ३७ |
| जलाधिवासायोग्यानाम् | ७ | २६ |
| जागरेण ततः प्रातः | २१ | ४७ |
| जानोरधस्तादक्षान्तम् | ४ | १६ |
| जामदग्न्यं तमालोक्य | १ | २३ |
| जितन्त इति मन्त्रेण | १६ | ५३ |
| जितन्ते पुण्डरीकाक्ष | १ | २६ |
| जीर्णोऽभून्मम वातापिस् | १ | ५२ |
| जीवनमन्त्रो मकारः स्यात् | ९ | ५३ |
| जुहुयाद्धेतिराजेन | २४ | ३७ |
| जुहुयान्मूलमन्त्रेण | १७ | ७५ |
| ज्ञानानन्दमयं देवम् | १ | १ |

झ

| | | |
|---|---|---|
| झकारः करतत्त्वं स्यात् | ९ | ६० |

ड

| | | |
|---|---|---|
| डकारः नेत्रतत्त्वात्मा | ९ | ५८ |

ण

| | | |
|---|---|---|
| णकारः श्रोत्रतत्त्वं स्यात् | ९ | ५७ |
| णाकारं वदनाम्भोजे | १६ | २५ |

त

| | | |
|---|---|---|
| तं गुरुं यानमारोप्य | १३ | ५० |
| तक्षासु भार्यामरणम् | १७ | ४० |
| तत उत्थाप्य देवेशम् | १२ | ८७ |
| तत उत्थाय तपसः | १ | ५५ |
| ततः कुंभगतां शक्तिम् | १९ | २५ |

| | | |
|---|---|---|
| ततः पुरुषसूक्तेन | १३ | ४२ |
| ततः पूजकमुख्यानाम् | २१ | ५८ |
| ततः पूर्णाहुतिं कुर्युः | ९ | ९९ |
| ततः प्रभाते तं देवम् | १२ | ५८ |
| ततः प्रभाते विमले | ११ | २२ |
| ततः प्रभाते विमले | १२ | १४ |
| ततः प्रभृति नाभ्यन्तम् | ४ | १४ |
| ततः प्रविश्य सदनम् | १६ | ६१ |
| ततः शयीत खट्वायाम् | २५ | २० |
| ततः शास्त्रविदाचार्यः | १९ | १७ |
| ततश्च मणिबन्धान्तम् | ४ | २४ |
| ततस्तु कलशन्यास | ४ | १२० |
| ततस्तु परमात्मानम् | ९ | १६ |
| ततस्तु मृण्मये पात्रे | १४ | २० |
| ततस्तेनैव गुरुणा | ६ | १० |
| ततस्त्वं शार्ङ्गधन्वानम् | २ | ३१ |
| ततो देवं समालोक्य | १६ | ४४ |
| ततो निर्गत्य सदनात् | १५ | ६० |
| ततो नूतनवस्त्रेण | १४ | ३० |
| ततो मङ्गलवादित्रैः | १२ | ६८ |
| ततो महेन्द्रमासाद्य | १ | १९ |
| ततो मूर्तित्रयं ध्यायन् | ११ | ४७ |
| तत्तत्क्रियोक्तविधिना | १७ | ५७ |
| तत्तत्प्रतिकृतिं तत्र | ८ | ४७ |
| तत्तत्स्थानेषु कलशान् | २० | ५१ |
| तत्तद्बिम्बगतां शक्तिम् | १० | २७ |
| तत्तन्त्रान्तरमुद्दिष्टम् | २२ | ६३ |
| तत्तन्नाम चतुर्थ्यैव | २० | ६३ |
| तत्तन्नृत्तादिसहितम् | १८ | २४ |
| तत्तन्मन्त्रैर्यथाकालम् | २२ | ४० |
| तत्त्वव्याहृतिभिः कुर्यात् | ९ | ५२ |
| तत्त्वसंहारजनने | ११ | १४ |
| तत्त्वहोमं स्वयं कुर्यात् | ९ | ४७ |
| तत्परं तत्परं तीर्थम् | २५ | ३४ |
| तत्र गत्वा क्षिपेद्बिम्बम् | १९ | ३५ |
| तत्र देवं समभ्यर्च्य | १२ | ८६ |

| | | |
|---|---|---|
| तत्र ब्राह्मं च दैवं च | २० | ६ |
| तत्र भेरी च कोणं च | ११ | ४१ |
| तत्र मध्ये धान्यपीठे | १२ | ८१ |
| तत्र श्रियं समावाह्य | १२ | ७१ |
| तत्रावाह्यार्चयेद्देवम् | १७ | १० |
| तत्सर्वं विष्णुयजनात् | २५ | ३६ |
| तथैव पालिकादीनाम् | २२ | ७० |
| तदप्यद्योपदेष्टव्यम् | २४ | ६ |
| तदर्थं कौतुकं बध्वा | १२ | ११ |
| तदर्थं यजमानश्च | ६ | २८ |
| तदर्थमङ्कुरन्यासम् | ११ | ५ |
| तदर्थमृत्विजां दद्यात् | १० | ५२ |
| तदस्योरुप्रतद्विष्णुः | ६ | ६६ |
| तदा प्रबोधयेद्देवम् | १६ | ३ |
| तद्दक्षिणे धान्यराशौ | ११ | ११ |
| तद्दोषशान्तये पुष्पैः | १३ | ३० |
| तद्वज्जङ्घासमुत्सेधम् | ४ | १६ |
| तद्वन्नृत्तं गणेशस्य | १८ | १३ |
| तन्तवश्चापि कुंभानाम् | ५ | ३६ |
| तन्तून् ब्राह्मणकन्याभिः | २१ | ७ |
| तन्त्राण्यमूनि चत्वारि | २२ | ६५ |
| तन्न भूञ्जीत मनुजो | १६ | ६७ |
| तन्मूलाज्जानुपर्यन्तम् | ४ | १५ |
| तपन्तमिव चादित्यम् | १ | २१ |
| तपसो विरम ब्रह्मन् | १ | १७ |
| तप्तचामीकरनिभम् | १ | २० |
| तमद्य तव वक्ष्यामि | ११ | ३ |
| तमाकाशे च मनसि | ९ | ४९ |
| तयैव जुहुयादग्नौ | २० | १०३ |
| तयोर्मण्डपयोरेवम् | ३ | २५ |
| तयोश्च रेखयोः मध्ये | ४ | ५१ |
| तर्जन्या मूलविस्तारो | ४ | ४६ |
| तस्मादभीतवत्स्थित्वा | १ | ४५ |
| तस्मादसंकरेणैव | २२ | ६४ |
| तस्मादसंकरेणैव | २२ | ६७ |
| तस्माद्धयर्चनाकाङ्क्षी | २४ | ३१ |

